# विश्वमनीषा

## ( त्रैमासिकी )

विधूतमोहा सुरवाचिसक्ता नवीनदृक्चिन्तननिर्निमेषा ।
विमत्सरा सौम्यतया मनोज्ञा प्रवर्त्ततां विश्वहिते मनीषा ॥




**प्रकाशकः**

**कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः, दरभङ्गा**

वर्षम्—१२ वि० सं० २०५०
अङ्कः— १ ई० सन् १९९४

# विश्वमनीषा

## ( त्रैमासिकी )




संरक्षकः—

डा० परशुराम उपाध्यायः
कुलपतिः

प्रधानसम्पादकः—

डा० कृष्णानन्द झा

सम्पादकमण्डलम्

१—डा० कीर्त्यानन्द झा
२—डा० वाचस्पति त्रिपाठी
३—डा० रामचन्द्र झा
४—डा० उपेन्द्र झा
५—डा० लक्ष्मीनाथ झा

कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः, दरभङ्गा ।

वर्षम्—१२
अङ्कः—१ ]

[ जनवरी, फरवरी, मार्च
१९९४ ई०

# विषयानुक्रमणिका

—:❀(◈)❀:—

## विषयानुक्रमणिका





# सम्पादकीयम्

—*※*—

अथेदं प्रस्तूयते विश्वमनीषाया: संस्करणम् । अस्मिन् कोलाहलमये कलिकाले शान्तिलाभस्वास्थ्यौषधिकल्पस्य संस्कृतवाङ्मयस्य प्रतिष्ठितविद्वद्भिषजां कविता-शास्त्रीयनिबन्धसामयिकविचारप्रवाहादिपथ्यनिर्देशभूयिष्ठतया विश्वमनीषेयमन्वर्थं नाम-धेया ! विश्वमनीषैव प्रभवेन्मनुजसन्ततेशम् सन्तताविति दृढं विश्वसीमि ।

विलम्बेनास्या: प्रकाशने सर्वभूतक्षयव्यसनी कालएवप्रष्टव्य: । आशासे वर्तमान-कुलपतीनां श्रीमतां डा० परशुरामोपाध्यायपादानां सत्प्रयासेन अग्रे-अस्या: प्रकाशनं हिमगिरितटीयपाषाणखण्डेभ्यो नि:सृताया: भागीरथ्या: प्रवहणमिव न केनाप्यवरु द्ध्येत । राष्ट्रीयशिक्षानीतौ संस्कृतस्योपेक्षा विषये-संस्कृतोपजीविनां यादृशी चिन्ता-जागरुकता चेहिता न तादृशी सम्प्रति प्रभवतीतिखेदं जनयति । विश्वविद्यालयेषु स्थायिकुलपतिनियुक्तौ विलम्बेनापि प्रलम्बते-शिक्षादिक्षादी क्रियाकलापेष्वौदास्यम् । विद्यार्थिसार्थै: शिक्षकसमुदायैश्च स्वजननीव संस्कृतभाषा परितो रक्षणीया-स्वस्व-परिवारेषु-तदध्ययनसंभाषणादिभि: सा क्षीणकलेवरापि रसायनसेवनसम्पोषितवृद्धे व-पुन: क्रियाक्षमा अस्मान् पोषयिष्यति ।

कुसुमसम्पदेव मालाकारो मालां ग्रथ्नाति । विश्वमनीषा स्रज: सुमनस्सम्पत्-मेधाविछात्रशिक्षकसन्तति: । मालाकारो यथा विविधकुसुमसमुदायोपस्थापककुलेना भिनन्दितो रमणीयतमां मालां वन्दारुवृन्दारकवृन्दभालेषूपाहर्त्तुं क्षमो भवति-तथैव-स्वस्वनिबन्धकाव्यशास्त्रीयविमर्शप्रदानैश्छात्रैरध्यापकैश्चाभिनन्दितोऽहमपि कमनीय कलेवरां प्रसादगुणभूयिष्ठां नवयौवनामिव स्मेराननां विश्वमनीषाभिधानां पत्रिका-मुपाहर्त्तुं क्षम: स्याम् । विज्ञेषु किमधिकेनेति ।

—सम्पादक:



# ज्यौतिषं नेत्रमुच्यते

वेदस्य षडङ्गेषु ज्यौतिषं नेत्रस्थानीयं प्रधानमङ्गं विद्यते। इन्द्रियेषु चक्षुरेव ज्योतिःस्वरूपं ज्योतिर्ग्राहकं चापि विद्यते। अतो ज्योतिषशास्त्रस्य ज्योतिरिन्द्रियात्मकत्वं वेदस्य नेत्रत्वं सर्वथा समीचीनम्। वेदाङ्गविषयकं पौराणिकं वचनमिदं प्रसिद्ध्यति—

मुखं व्याकरणं तस्य ज्यौतिषं नेत्रमुच्यते।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे।
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते[1]॥ इति॥

ज्योतिषां ग्रहनक्षत्रादीनां गतिमधिकृत्य कृतं शास्त्रम्, अथवा ग्रहनक्षत्राण्यधिकृत्य कृतो ग्रन्थो "ज्योतींषि ज्यौतिषम्, 'अधिकृत्य कृते ग्रन्थे' इति सूत्रात्"[2]। ग्रहगत्यैव कालनिर्णयो जायते, कालस्य शुभाशुभत्वं च प्रतिपाद्यते। अत एवास्य शास्त्रस्य 'कालविधानशास्त्र'मित्यपि नामान्तरम्[3]। तथा च कालज्ञानशुभाशुभादिनिरूपकत्वेन शास्त्रमिदं वेदाङ्गमस्ति। "लौकिक-वैदिक-कार्यमात्रस्य समयाधीनत्वात् तज्ज्ञानं येन शास्त्रेण भवति तज्ज्यौतिषम्। साक्षिभूतत्वेन वर्त्तमानत्वादिह नेत्रत्वेनाख्यानम्" इति पं० मुरलीधरठक्कुरोक्त्या[4] कालस्य महत्त्वं, तत्प्रतिपादक ज्योतिषशास्त्रस्य च महत्त्वं प्रकटीभवति। समयः सुयोगघटितः कुयोगघटितो वा इत्यस्य साक्षिभूतं ज्यौतिषं शास्त्रम्। अतोऽस्य नेत्रत्वं समीचीनमेव। यत्किमपि श्रौतं स्मार्तं लौकिकं वा कर्म भवति तत्सर्वं कालाश्रितमेव। यथा-ग्रहण-वारुणी-कुम्भयोगादिषु समयं ज्ञात्वा मज्जन-दर्शन-गमन-सौभाग्यादीनि इष्यन्ते,[5] भूशोधन-व्रत-सांवत्सरश्राद्ध-यात्रा-संस्कारादीनि प्रत्यक्षतया कालाश्रितानि एतच्छास्त्राधारेण निर्धारितसमय एव सफलानि भवन्तीति सर्वं स्वानुभूतमेव विपश्चिताम्। इममाशयं सिद्धवत्कृत्य महर्षिणा नारदेनोक्तम्:—

सिद्धान्तसंहिता-होरा-रूपस्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिः शास्त्रमकल्मषम्॥
विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्ध्यति।
तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा।
अत एव द्विजैर्नित्यमध्येतव्यं प्रयत्नतः॥ इति॥[6]

---

१. लघुसिद्धान्तकौमुदी–इन्दुमती–प्रस्तावना—पं० रामचन्द्र झा।
२. सिद्धान्तशिरोमणि–वासनावार्त्तिकम्—पृ०–१०। ('ज्योतिस्'शब्दादण्प्रत्यये ज्यौतिषमिति, 'अर्श आदित्वाद्' अच्प्रत्यये तु ज्योतिषम् इत्यपि रूपम्)।
३. यजुर्वेदज्योतिषम्—श्लोकः ३।
४. सिद्धान्तशिरोमणि-'प्रभा' वासना—पृ०–६।
५. प्रबन्धमणिमाला—पं० गंगाधर मिश्रः—पृ०-३२–३५। ६. नारदसंहिता।

एतेन श्रौत-स्मार्त्तकर्मणः साधकत्वं ज्यौतिषशास्त्रस्य स्पष्टमभिहितम्। स्मार्त्तस्य श्रुतिस्मारकत्वात् प्रत्यक्षानुमितवेदस्यैवोपकारकत्वात्तस्यैवाङ्गत्वं ज्यौतिषस्य, परम्परयैव स्मृत्युपकारकत्वम्। तथा चोक्तं वार्तिककारेण।

"इदं वेदमात्राङ्गम्। स्मृति-पुराणप्रतिपादितकर्मापि काले विधेयमिति अनुमित-वेदस्यापि ज्योतिश्शास्त्रमङ्गम्। तिथ्यादिकालनिर्णयशास्त्रमपि ज्योतिश्शास्त्राधीन-मिति"[७]।

अत्र पं० कृष्णदत्तझाशर्मणोक्तम्—"ननु कथं ज्योतिषं श्रौतस्मार्त्तकर्मोपयोगिक-मिति चेदुच्यते—"अष्टवर्षं ब्राह्मणमुपनयीत" तथा "वसन्ते ब्राह्मणोऽग्नीनादधीत, दर्श-पौर्णमासाभ्यां यजेत्"—इत्यादिश्रुतयः सन्ति। तत्र वर्षज्ञानं सूर्यादिग्रहचारवशेन साध्यम्। वसन्तादिऋतूनां, दर्शपौर्णमासयोश्च ज्ञानं ज्यौतिषं विना सर्वथैव न निर्वहती-त्यवश्यमध्येतव्यं ज्योतिश्शास्त्रमिति"[८]।

इत्थं वेदप्रतिपाद्य-यज्ञादिकर्मणः कालाश्रितत्वं, कालस्य च ज्यौतिषप्रतिपाद्य-त्वमिति परमोपयोगित्वमविनाभावत्वं च वेदकृते ज्यौतिषस्य। अत्र वार्तिककारेण शङ्का कृता यत् कर्म (यज्ञादि) तु विधीयते, तेन तस्य विधेयत्वम्। कालस्तु न विधी-यते, स तु उद्देश्यतयोच्यते-अमुकसमये अमुककर्मणो विधानमिति। विधेयस्य विधेयेनैव अङ्गाङ्गिभावः संभवति न तूद्देश्येन। तत् कथं कर्मणा सह कालस्याङ्गाङ्गिभावः? कालस्यैव अङ्गत्वे असिद्धे तदाश्रितस्य ज्यौतिषस्याङ्गत्वं तु सुतरां नैव सेत्स्यतीति'। एतस्याः समाधाने कथितं यत् कालस्यापि विधेयत्वं वेदे दृश्यते। यथा—"पौर्णमास्यां यजेत" अत्र यागस्तु पूर्ववाक्यानुवृत्तः प्राप्त एव। नात्र तस्य विधानार्थमिदं वाक्यमपि तु कालसम्बन्धमात्रं (पौर्णमास्यामिति) भवत्वित्यर्थमेव विधेयवाक्यमिदम्। एतदेव कालस्य विधेयत्वम्। विधेयत्वाच्चाङ्गत्वसिद्धिः। तस्माद् वेदप्रतिपाद्यस्य कर्मणो ज्योति-श्शास्त्रप्रतिपाद्यः कालोऽङ्गम्। प्रतिपाद्ययोः कर्म-कालयोः अङ्गाङ्गिभावत्वं प्रतिपादक-योरपि वेद-ज्यौतिषयोः औपचारिकतया संगच्छते। इत्थं हि वेदस्य ज्यौतिषशास्त्रमङ्ग-मिति सिद्ध्यति[९]।

ज्योतिषशास्त्रस्य प्रयोजनं प्रतिपादयता महर्षिणा कश्यपेन स्वसंहितायां काल-निर्णय एव सारांशतया वर्णितः—

ग्रहण-ग्रह-संक्रान्ति-यज्ञाध्ययन-कर्मणाम्।
प्रयोजनं व्रतोद्वाह-क्रियाणां कालनिर्णयः॥ इति॥

---

७. सि० शि० वासनावार्त्तिकम्—पृ०–११।

८. जातकक्रोडः—पृ०–८।

९. सि० सि० वासनावार्तिकम् (नृसिंहकृतम्) —पृ०–११।

एवंप्रकारेण ज्यौतिषशास्त्रं वेदस्याङ्गम्। अतो वेदवन्मान्यम्। शुचीभूतेनैव पठनीयम्। एतत्पारायणेन वेदपारायणतुल्यं फलं जायते। किञ्च षडङ्गेषु शास्त्रमिदं प्रधानं सर्वोत्कृष्टत्वेन राजते। तथा चोक्तम्—

यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्ध्नि संस्थितम्[१०] ॥ इति।

अयमाशयः—वेदस्य चरमलक्ष्य—यज्ञादिसाधकत्वेन ज्योतिषस्य प्राधान्यम्। व्याकरणस्य प्रधानता तु प्राथम्येनावश्यकाध्ययनविषयत्वादेव। सर्वाध्ययनमूलभूतं हि व्याकरणम्। तदधीत्यैव कश्चित् शास्त्रान्तरश्रवणेऽधिकारी[११] भवतीतिधियैव महाभाष्यकारेणोक्तम्[१२]—"प्रधानं च षट्स्वङ्गेषु व्याकरणमिति"। किञ्चान्यान्यङ्गानि प्रत्यक्षस्यैव प्रतिपादनं कुर्वन्ति। ज्योतिषं तु ग्रहगतीनामतिदूरस्थानामपि (अदृश्यानामपि) प्रतिपादनं कृत्वा तत्फलं प्रत्यक्षतया प्रतिपादयतीति श्रेष्ठता तस्य सर्वैः स्वीक्रियत एव। इत्थमलौकिक- दिव्यदृष्टिवत् कार्यकरत्वादस्य चक्षूरूपत्वं प्रतिपादितम्। चक्षूरहितस्य यथा अकिञ्चित्करत्वं तथैवैतच्छास्त्ररहितस्येति वृद्धवसिष्ठेनोक्तम्—

वेदस्य चक्षुः किल शास्त्रमेतत्
प्रधानताङ्गेषु ततोऽस्य जाता।
अङ्गैर्युतोऽन्यः परिपूर्णमूर्त्तिः
चक्षुर्विहीनः पुरुषो न किञ्चत्[१३] ॥ इति।

एतस्य सर्वातिशायि महत्त्वमाकलय्यैव कैश्चिदुक्तम्—

अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।
प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ॥

शास्त्रेणानेन अप्रत्यक्षाणां भविष्यविषयाणां पूर्वमेव वर्णनं क्रियते, यच्च कालान्तरे प्रत्यक्षतया दृश्यते। यथा ग्रहगतिः, ग्रहणं, वृष्टिः, भाग्योदय इत्यादयः। अतएव वार्तिककारेणास्य प्रामाण्यविषये कथितम्[१४]—

एतत्प्रतिपाद्य-ग्रहचारादेः प्रत्यक्षप्रमाणसिद्धत्वात् वेदवत् स्वतः प्रमाणम्, स्मृतिवद् वेदमूलकत्वेन वा प्रमाणम्" इति।

१०. यजुर्वेदज्योतिषम् —श्लोक सं०—४।
११. भास्कराचार्यः—सि० शि०—१.८।
१२. महाभाष्यम्—पस्पशाह्निकम्।
१३. सि० शि०—१.११ (पद्यस्यास्यानुवादः)।
१४. सि० शि०—वासनावार्तिकम्—पृ०—१३।

वेदमूलकत्वञ्चास्य शास्त्रस्य बहुभिः प्रतिपादितमेव । यथा—

"चन्द्रमा वै पञ्चदश, पञ्चदश्यामपक्षीयते, पञ्चदश्यामापूर्यते" । इति[१५] ।

तदित्थं प्रमाणभूतस्य ज्यौतिषशास्त्रस्य विशिष्टत्वाद् विज्ञानत्वं, विज्ञानेष्वपि सर्वश्रेष्ठत्वं वर्तते:—

(१) सन्ति विज्ञानशास्त्राणि विविधान्यधुना बुधाः ।
तेष्विदं ज्यौतिषं शास्त्रं श्रेष्ठं वैज्ञानिकै र्मतम्[१६] ॥

(२) वेदाङ्गमग्र्यमखिलं ज्योतिषां गतिकारणम् ॥[१७]

(३) पञ्चभूतानि, त्रयो गुणाः, सप्तधातवश्च ग्रह-नक्षत्र-ज्योतिःप्रभावादेव जायन्ते ।[१८]

स्कन्धत्रयाधिष्ठितं[१९] शास्त्रमिदमिति वराहमिहिरेणोक्तम् । तत्र (१) सिद्धान्त-(२) संहिता (३) होरेति नाम्ना प्रसिद्धेस्कन्धत्रये निम्नलिखिता विषयाः समायान्ति:—

(१) सिद्धान्ते—पाटी-बीज-रेखा-त्रिकोण-प्रतिभाज्ञान-खगोल-ग्रहण-शृङ्गोन्नति-ग्रहणयुति-ग्रहोदय-वक्रत्व-मार्गत्व-पञ्चाङ्ग-ग्रहस्पष्टीकरण-यन्त्रधनानि[२०] समायान्ति । पञ्चसिद्धान्तिका, सूर्यसिद्धान्तः, सिद्धान्तशिरोमणिः, सिद्धान्तशेखरः, सिद्धान्ततत्त्वविवेकः, सिद्धान्तसेतुश्चेति प्रसिद्धाः सिद्धान्तग्रन्थाः सन्ति ।

(२) संहिताग्रन्थे—ग्रहचारवशेन जगतां शुभाशुभत्वं, शस्यविचारः, वृष्टिः, भूकम्पाद्यद्भुतादिविषयाः[२१] समायान्ति । अत्र भृगुसंहिता, पराशरसंहिता, नारदसंहिता, गर्गसंहिता, शाकल्यसंहिता, शिवसंहिता, बृहत्संहिता चेति प्रसिद्धग्रन्थाः सन्ति ।

(३) होराग्रन्थे—जन्मकुण्डलीविचारात्मकजातक - मुहूर्त्त - वास्तु - ताजिक-सामुद्रिकादिविषया भवन्ति । अत्र बृहत्पाराशरहोराशास्त्रम्, सामुद्रिकशास्त्रम्, गर्गहोरा,

---

१५. तैत्तिरीयं ब्राह्मणम्—१, ५, १० ।
१६. विमण्डलवक्रविचारः—पं० दयानन्द झा कृतः पृ०–१ ।
१७. सूर्यसिद्धान्तः—१, ३ ।
१८. सूर्यसिद्धान्तविज्ञानभाष्य—१, ३ ।
१९. वृहत्संहिता—उप०–९ ।
२०. प्रबन्धमणिमाला—पृ०–३२ ।
२१. प्रबन्धमणिमाला—पृ०–३२ ।

बृहज्जातकम्, मुहूर्तचिन्तामणिः, वास्तुरत्नावली, ताजिकनीलकण्ठीत्यादयो ग्रन्था मुख्याः सन्तिः ।

साम्प्रतं तु ज्यौतिषशास्त्रं विभागद्वये एव समाविष्टं विलोक्यते—

(१) गणितम्—सिद्धान्त[२२]-तन्त्र-करणेति उपविभागसंवलितम् । तत्र सिद्धान्ते यथा—सूर्यसिद्धान्तः, तन्त्रे यथा—ताजिकनीलकण्ठी, करणे यथा—ग्रहलाघवम्, मकरन्दः ।

(२) फलितम्—जातक-मुहूर्त्त-प्रश्न-संहिता-वास्तु-सामुद्रिकेति उपविभागषट्क-संवलितम् ।

पूर्वोक्तविवरणेन ज्यौतिषशास्त्रस्य विशालता व्यापकता च स्पष्टा जाता । तथा चास्य उपयोगिता चापि महती वर्तते । वेदे, वेदाङ्गे, स्मृतौ, पुराणे, कर्मकाण्डे, लौकिकव्यवहारे चेति सर्वत्र अस्यावश्यकता दृश्यते । प्रतिव्यक्ति आपामरजनाः दैवज्ञमनुधावन्ति । एतद्विना सामाजिकी व्यवस्था क्षणमपि स्थातुं नार्हतीति सर्वथास्यानिवार्यत्वं लोके वेदे चेति ध्येयम् ।

ननु अङ्गं नाम अवयवो यथा मनुष्यस्य हस्तादि मनुष्यग्रहणेन गृह्यते, न तथा वेदग्रहणेन तदङ्गस्य ज्योतिषादेर्ग्रहणं भवतीति कथं तस्य वेदाङ्गतेति चेदुच्यते—"अत्राङ्गपदम् उपकारकपरम् । नेत्रादिव्यवहारस्तु नेत्रमिव प्राधान्येनोपकारकत्वात्"[२३] ज्यौतिषादीनि षडङ्गानि वेदस्यातिशयोपकारकाणि भवन्ति । उपकारके अङ्गत्वस्य आरोपादङ्गपदेन प्रसिद्धानीति भावः । वेदस्य अनवयवेऽपि ज्यौतिषादौ अवयव-तुल्योपकारकवशाद् अवयव-व्यवहार इति फलितार्थः ।[२४] ज्योतिषस्य वेदविहितकर्मसाधकत्वेन वेदोपकारकत्व-मस्त्येव । तथा चाह सोमाकराचार्यः[२५]—

मन्त्रपाद-पद-सन्धिविधिज्ञः
धातुनामवचनप्रकृतिज्ञः ।
ईदृशो भवति यज्ञविधिज्ञः
पक्षमासतिथिचन्द्रगतिज्ञः ॥

---

२२. "तत्र ग्रहगणिते पौलिश-रोमक-वासिष्ठ-सौर-पैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु"—बृहत्संहिता-सांवत्सरसूत्र—३ ।

२३. पाणिनीयव्याकरण तत्त्वप्रदीपः—महावैयाकरण दीनबन्धु झा—पृ०-७ ।

२४. सूर्यसिद्धान्त-'हिन्दीविज्ञानभाष्य'—मध्यमा०–३–"वेदाङ्गों से वेद के समझने-समझाने में सहायता मिलती है, इसीलिए इसे वेदाङ्ग कहते हैं" ।

२५. वेदाङ्गज्योतिषभाष्ये ।

अथ कस्य ग्रन्थस्य वेदाङ्ग ज्योतिषत्वम् ? यतो हि सन्ति शतशो ग्रन्थाः शास्त्रस्यास्य। अत्रोच्यते— वेदोपकारकग्रन्थस्यैव वेदाङ्गता। वेदप्रतिपाद्यविषयसम्बद्ध-लौकिकविषयोपकारकस्यापि वेदाङ्गता। तत्रापि आर्षग्रन्थस्यैव पारायणादौ पुण्यजन-कत्वम्। ज्योतिषस्य ग्रन्थानां प्रकारद्वयं विद्यते—(१) आर्षाः (ऋषिभिः दिव्यदृष्ट्या प्राप्ताः, प्रणीताश्च), (२) पौरुषाश्च (ज्यतिर्वित्पण्डितैर्निर्मिताः)। तत्र आर्षग्रन्थेषु— वेदाङ्गज्योतिषम् (ऋग्वेदज्योतिषम्, यजुर्वेदज्योतिषम्, अथर्वज्योतिषम्), सूर्य-सिद्धान्तः, पितामहसिद्धान्तः, पौलिससिद्धान्तः, रोमकसिद्धान्तः, वासिष्ठसिद्धान्तः, सोमसिद्धान्तः, व्याससिद्धान्तः, भृगुसंहिता, नारदसंहिता, शिवसंहिता, शाकल्यसंहिता, गर्गसंहिता, पराशरसंहिता, पाराशरहोराशास्त्रम्, गर्गहोराशास्त्रम्, लोमशसंहिता, भृगु-सूत्रम्, जैमिनिसूत्रम्, शिवसूत्रम्, समुद्रप्रोक्त-सामुद्रिकशास्त्र-प्रभृतयो ग्रन्था उपलभ्यन्ते। एतच्छास्त्रप्रवर्त्तकास्त्वेते :—

सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशराः।
कश्यपो नारदो गार्ग्यो मरीचिर्मनुरङ्गिराः॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादश ह्येते ज्योतिश्शास्त्र प्रवर्त्तकाः॥ काश्यपसंहिता॥

पौरुषेषु ग्रन्थेषु बृहत्संहिता - पञ्चसिद्धान्तिका - बृहज्जातक - आर्यभटीय - शिष्यधी-वृद्धिद-सारावली - ब्रह्मस्फुटसिद्धान्त - सिद्धान्तशेखर - श्रीपतिपद्धति - राजमार्त्तण्ड - वसन्त-राजशाकुन - अद्भुतसागर - सिद्धान्तशिरोमणि - लघुभास्करीय - महाभास्करीय - ग्रह-लाघव-मुहूर्त्तचिन्तामणि-सिद्धान्ततत्त्वविवेक-सम्राट्सिद्धान्त - मकरन्द - ज्योतिर्विदाभरण-रत्नशतक-रत्नकलाप-जातकतत्त्व-सिद्धान्तसौध - जन्मपद्धति - व्यवहाररत्न - सिद्धान्तसेतु-प्रभृतयो ग्रन्था उपलब्धाः सन्ति। दृश्यते हि पौरुषग्रन्थेषु आर्षग्रन्था नुसरणम्। तथाहि सिद्धान्तशिरोमणिस्थाः केचन श्लोका[२६] अविकलं पूर्वाचार्यवचनानुवादरूपा एव सन्ति। अत आर्षग्रन्थमूलकत्वाद् वेदोपकारकत्वाच्च पौरुषग्रन्थानामपि वेदाङ्गत्वं सिद्धमेव।

ज्यौतिषस्य वेदवदेव अनादिशास्त्रत्वमपि शास्त्रकारैः कथितम्। एतच्छास्त्रीया-परम्परा तथैव प्रतिपादयति :—

२६. तुलनीयः—(i) सिद्धान्तशिरोमणिः स्पष्टा० — ९—वेदाङ्गज्यो०—"वेदा हि......"।
(ii) ,, ,, — ९—वसिष्ठसिद्धान्तः— ,, ।
(iii) ,, ,, —११—सि० शेखरः—१, ६।
(iv) ,, ,, —१२—वशिष्ठ०—मध्या०—१०।
(v) ,, ,, —१२—सि० शेखरः—१, ७।

"स्वयं स्वयंभुवा सृष्टं चक्षुर्भूतं द्विजन्मनाम्।
वेदाङ्गं ज्यौतिषं ब्रह्म परं यज्ञहितावहम्।
मया स्वयंभुवः प्राप्तं क्रियाकालप्रसाधनम्" ॥[२७]

एतदनुसारं सृष्टिकर्त्रा ब्रह्मणैव शास्त्रमिदं सृष्टम्। तेन संसारप्रवृत्त्या सहैव शास्त्रमिदं प्रादुर्भूतम्। एवमेव सिद्धान्ततत्त्वविवेककारेण स्पष्टीकृतं यत् ज्योतिषशास्त्रं ब्रह्मा नारदाय, चन्द्रमाः शौनकाय, नारदो वशिष्ठाय, सूर्यो मयाय, मयश्च ऋषिभ्यः प्रोवाच।[२८] एतत्परम्परा ज्योतिषशास्त्रमनादि सूचयति। यथैव चन्द्रतारकादि तथैव शास्त्रमिदमविच्छिन्नं वर्तत एव। यथा अनादिवेदेन सह ऋषीणां सम्बन्धः— "गायत्र्या विश्वामित्र ऋषिः" इत्यादिना दृश्यते तथैव अनादिभूतस्य ज्योतिषशास्त्रस्य सादिभि र्नारदादिभिः सम्बन्धः स्वीक्रियते। वस्तुतः अनादिज्योतिस्तत्त्वस्य प्रकाशका एव नारदादयो, न तु कर्त्तार इति तत्त्वम्।

नित्याध्ययनविधि र्यथैव वेदाध्ययनमनिवार्यं बोधयति तथैव वेदाङ्गाध्ययनमपि। "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च"[२९] इति आगमवाक्यबलाद् वेदाङ्गाध्ययनं नित्यकर्म। तदकरणे प्रत्यवाय एव। अतो द्विजातिर्भिनित्यं ज्यौतिषमध्येतव्यम्।

---

२७. गर्गसंहिता।
२८. सि० त० विवेकः—मानाध्यायः—६५।
२९. व्याकरणमहाभाष्यम्—प्रथमाह्निकम्।



# नियमविचारः

यथा अपवादोत्सर्गशास्त्रयोरुद्देश्यतावच्छेदकं व्याप्यव्यापकभावापन्नं तथा नियमशास्त्रनियमप्रयोजकशास्त्रयोरपि। तत्रायं विवेकः—विधेयभेदेऽपवादता,[1] तदैक्ये[2]तु नियमत्वम्। किञ्च अपवादशास्त्रम् स्वोद्देश्यभिन्नत्वेनोत्सर्गशास्त्रोद्देश्ये संकोचप्रयोजकं, नियमशास्त्रम् तु स्वोद्देश्यभिन्नत्वेन। तथा सतिहि शास्त्रान्तरप्राप्तविधेयं व्यवच्छिद्य पुनस्तथैव विधाने फलाभावेन नियमशास्त्रस्य वैयर्थ्यापत्तिः। स्वोद्देश्यसजातीयभिन्नत्वेन संकोचे तु स्वोद्देश्येतर स्वोद्देश्यसजातीयव्यवच्छेदात् सार्थक्यं भवति। युक्तं चैतत्, गौरेवानीयतामित्यादिव्यावहारिकवाक्यतोऽपि गवेतरगोसजातीयमहिष्यादिपशोरेव व्यवच्छेदः प्रतीयते, न विजातीयलोष्टादेः।

नियमो ह्यवधारणम्, अन्ययोगव्यवच्छेद इति प्रसिद्धः। तत्र योगः=सम्बन्धः, व्यवच्छेदः=अभावः। तथाचान्यत्र सम्बन्धाभाव इति सरलोऽर्थः। यथा—पार्थ एव धनुर्धर इत्यत्रैवकारः स्वसमभिव्याहृतपदार्थतावच्छेदकीभूतधनुर्धरत्वे पार्थान्यमानवाऽवृत्तित्वं द्योतयति। तेन पार्थान्यमानवव्यवच्छिन्नधनुर्धरत्वविशिष्टःपार्थ इति बोधः। अतश्चैवशब्दोवैयाकरणमते नियमस्य द्योतकः। तार्किकमते तु वाचकः।

तदुक्तम्—नावक्लृप्तौ यदादृष्टः पररूपस्य गोचरः।
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्॥[3]

तन्वेवकारं वैयाकरणः क्वचिच्छास्त्रे इष्टतोऽवधारणार्थमुपादत्ते, न पुनः सर्वत्र। तदनुपादानेऽपि हि नियमशास्त्रत्वं न हीयते। समे यजतीत्यादाविव तस्य अध्याह्रियमाणत्वात्, यथा—"प्रत्ययलोपेप्रत्ययलक्षणम्" "कारनाम्नि चे"त्यादौ।

यत्र तु नाध्याहारसम्भवः यथा "कृत्तद्धि[4]तसमासाश्चे" त्यत्र, तत्र समासपदमेव, अब्भक्षो वायुभक्ष इत्यादावबादिपदमिव सामर्थ्यात् सावधारणमर्थात् समासमात्रपरम्।

---

१. विधेये=कार्यभेदे इत्यर्थः। यथा—इकोयणचीत्यस्य "अकः सवर्णे दीर्घः" इत्यपवादः। आद्यस्य विधेयं यण्कार्यम्, अपरस्य च दीर्घं इति कार्यभेदेऽपवादता भवति।

२. ऐक्ये कार्यैक्ये इत्यर्थः। यथा-कृत्तद्धितेति सूत्रेसमासग्रहणस्य नियमत्वम्। तत्र अर्थवत् इतिसूत्रस्य कृत्तद्धितेति सूत्रस्य च विधेयं प्रातिपदिकत्वम्, समासग्रहणकृतनियमस्यापि तदेव विधेयमितिकार्यैक्ये नियमत्वम्।

३. प्रौढमनोरमायामच्सन्धौ उद्धृतम्।

४. पा० सूत्र सं०—१-२-४६

ननु समासग्रहणादेर्नियमशास्त्रत्वं यदुच्यते वैयाकरणैः, तन्नोचितम्, तस्य हि परिसंख्याशास्त्रत्वमेव वक्तुं युक्तम्। तथा चोक्तं मीमांसकैः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥[1]

अस्यार्थः—स्वविधेयस्यात्यन्तमप्राप्तौ पाक्षिकया अपि प्राप्तेरभावे विधिरित्युच्यते। यथा—काम्यविधिः "सोमेन यजेत" इति सोमयागस्य सर्वथैवाऽप्राप्तत्वात्। एवं "अहरहः सन्ध्यामुपासीत" "राहूपरागे स्नायात्" इत्यादयो नित्यनैमित्तिक-विषयः।

अथ च स्वविधेयस्य पाक्षिके प्रसङ्गे सति नियम उच्यते। यथा—"व्रीहीनवहन्ती"ति अत्र हि निस्तुषीकरणाय कदाचिन्नखादिव्यापारः कदाचिदवघातश्च प्राप्त इत्यवघातस्य पाक्षिकप्राप्त्या अवहन्यादेवेति नियमः क्रियते एवं ऋतौ भार्यामुपेयादि"त्यत्रापि नियमः, उपेयादेवेति। पुत्रोत्पादनेच्छायां कदाचिद् भार्योपगमस्य, सति गर्भेयौवनच्युतिभिया कदाचित्तदुपेक्षाया अपि प्रसक्तेः।

अथ च स्वोद्देश्ये तद्भिन्नेच स्वविधेयस्य प्राप्तौ सत्यां परिसंख्या गीयते = कथ्यते। यथा—"समे यजति" इति। यागो हि कस्मिंश्चन देशे विधातव्यः। तस्य समे विषमे वा प्राप्तिः, तस्य परिसंख्यायते समे एव स्थले यजेदिति। एवं "पञ्च पञ्च नखा भक्ष्या" इत्यपि परिसंख्या, शशकादिपञ्चनखस्येवान्येषां श्वादिपञ्चनखजन्तूनामपि भक्षणस्य रागतः प्राप्तेः। तत्र परिसंख्यायते पञ्चनखाःपञ्चैवभक्ष्या अतोऽन्येऽभक्ष्या इति।

यद्यपि सत्यामिच्छायां शशकादिभक्षणं प्राप्तमनिच्छायान्तु नेति पाक्षिकप्राप्तिसत्वात् पञ्चनखा भक्ष्या एवेति नियमोऽपि सम्भवति तथापि गृहेऽपिनिवसन् विप्रोमुनिः मांसविवर्जनादि"त्यादिभिर्विरोधान्न नियमः अपि तु परिसंख्यैव। तदुक्तं[2] मिताक्षरायां-पञ्चपञ्चनखा भक्ष्या इत्यत्र यद्यपि शशादिभक्षणस्य पक्षे प्राप्तेर्नियमः, शशादिषु श्वादिषु च प्राप्तेः परिसंख्येत्युभयसम्भवः तथापि नियमपक्षेशशाद्यभक्षणे दोषप्रसङ्गः, श्वादिभक्षणे चाऽदोषप्रसङ्गेन प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवाश्रितेति। एवं ऋतौ भार्यामुपेयादित्यत्रापि ऋतावनृतौ च गमनस्य प्राप्तत्वादृतावेव उपेयादित्येवं परिसंख्यापि सम्भवति, तथापि मनुष्याणामनृतावपि पुरुषसङ्गम इतीन्द्रतो वरप्राप्त्या कामतोऽनृतावपि सङ्गमः शास्त्रसिद्ध इति, तत्र न परिसंख्या अपितु नियम इति "य[3]थाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्नित्यत्र मिताक्षरायां विस्तरः।

---

१. परमलघुमञ्जूषायाम्–पृ० सं०-१४५ (श्लोक वार्तिके कुमारिलभट्टपादैः)
२. याज्ञवल्क्यस्मृतिव्याख्या, आचाराध्यायः, श्लो०-८१।
३. याज्ञवल्क्यस्मृतिः, आचारा०-८१।

एवञ्च समास ग्रहणादेर्नियमत्वकथनमसङ्गतम्। नह्यत्र प्रादिपदिकत्वादिकं पक्षे प्राप्तमपि तु नित्यमेव। प्रत्युत समासादौ तद्भिन्न तत् सजातीयेषु प्रातिपदिकत्वादेः प्राप्तत्वात् परिसंख्यात्वमेव युक्तमिति चेत्, अत्र वदन्तिव्याकरणे वस्तुतो नैकोऽपि नियमः, किन्तु अन्यव्यवच्छेदफलकत्वसाम्यात् परिसंख्यैव नियमशब्देनोच्यते।

परेतु मीमांसकपरिभाषिता परिसंख्यापि नियमविशेष एव। तथाहि-नियमो द्विविधः (१) क्रियाव्यवच्छेदः (२) क्रियाभिन्नस्य कारकादेर्व्यवच्छेश्च। तत्राद्यौ व्रीहीनवहन्तीत्यादिर्मीमांसकैः नियमशब्देन व्यवह्रियते, द्वितीयस्तु समे यजतीत्यादिः परिसंख्याशब्देन। वस्तुतस्तदुभयमपि नियम एव। तस्मात् समासग्रहणादौ पञ्च पञ्चनखाभक्ष्या इत्यादौ च सर्वत्र वैयाकरणानां मुख्य एव नियमव्यवहार इत्याहुः।

नियमशास्त्रस्य विधिमुखेन निषेधमुखेन वा प्रवृत्तिः। यथा—समासग्रहणं नियमयति समास एव प्रातिपदिकसंज्ञकं स्यादिति अर्थात् समासः प्रातिपदिकं समासेतरत् समाससजातीयं न प्रातिपदिकमिति। तत्रविधेः (प्रातिपदिकत्वस्य) पूर्वसूत्रेण सिद्धतया यदि तत्र विधेयत्वेन न तात्पर्यं किन्तु सूत्रान्तरप्राप्तस्य समासेतरसमाससजातीयस्यनिषेधे तदा निषेधमुखेन प्रवृत्तिः। अस्मिन्पक्षे समासग्रहणं "न[1]तिसृचतसृ" इत्यादिवन्निषेधकमेव न विधायकम्। विधिमुखेन निषेधमुखेन वा प्रवृत्तिरित्यत्र विधिर्भावः निषेधस्त्वभावः। मुखशब्दः प्राधान्ये। प्रवृत्तिस्तु लक्ष्ये विधेयसम्बन्धः। भावेऽभावे च प्राधान्यं विधेयत्वेन तात्पर्यविषयत्वम्। विधिमुखेनेत्यादितृतीयायाः प्रकृत्यादित्वाद् विहितत्वेन प्रवृत्तिपदार्थावच्छेदकविधेयान्वयिवैशिष्ट्यमर्थः। तथा च भावनिष्ठं यत् प्राधान्यमर्थात्विधेयत्वेन तात्पर्यविषयत्वं तद्विशिष्टस्य विधेयस्य लक्ष्येसम्बन्धः इति विधिमुखेन प्रवृत्तिरित्यस्यार्थः।

तत्र निषेधमुखेन प्रवृत्तिपक्षे समासः प्रातिपदिकमित्यस्य यथाश्रुतार्थंपरित्यज्य समासेतरत् समाससजातीयं न प्रातिपदिकमित्यर्थः स्वीकर्त्तव्यो भवति। अतएव नियमे स्वार्थहानिः, परार्थकल्पना, प्राप्तबाधश्चेति त्रयोदोषा आपतन्तीतिवदन्ति। तथाहि—समासपदंसमासरूपं स्वार्थंजहातीति स्वार्थहानिः, समासेतरसमाससजातीयरूपमन्यपदार्थमुपादत्त इति पदार्थकल्पना, एवं प्रादिपदिकपदमपिस्वार्थमपहाय प्रातिपदिकत्वाभावत्परं सम्पद्यत इति स्वार्थहानिः, परार्थकल्पना च। तथा समासेतरतत्सजातीयस्यसूत्रान्तरेण प्राप्तं प्रातिपदिकत्वं बाधनीयं भवतीति प्राप्तबाधः। एतादृशगौरवपरिहारमूलकविधिनियमसम्भवे विधिरेव ज्यायानिति वैयाकरणसिद्धान्तः।

यदि तु श्रुतत्वात् भाव एव विधेयत्वेन तात्पर्यविषयो न निषेधस्तदा विधिमुखेन प्रवृत्तिः। अस्मिन् पक्षे विहितस्य पुनर्विधानं व्यर्थं सत् सामर्थ्याद् स्वोद्देश्यसजातीये

१. पा० सूत्र सं०—६-४-४

शास्त्रान्तराऽप्रवृत्तिं गमयति। तदुपपत्तये च व्यर्थताप्रयोजकशास्त्रे व्यर्थीभवच्छास्त्रोद्देश्य सजातीयव्यतिरिक्तत्वेन संकोच आवश्यकः। तेन समासेतरतत्सजातीयं न प्रातिपदिकमिति निषेधोऽर्थात् सिद्ध्यतीत्यार्थिकं निषेधमादाय नियमशास्त्रस्य निषेधकत्व व्यवहारः। एवकारेण च तादृशसङ्कोचसिद्धएव व्यवच्छेदोऽनूद्यते। एवं नियमानां विधिमुखेन प्रवृत्तेरुपपत्तिरिति वदन्ति।

परे तु विधिमुखेन वा निषेधमुखेन वा प्रवृत्तौ नार्थ भेदो नियमशास्त्रस्य। तथाहि—समासग्रहणस्य सामर्थ्येन नियमार्थतया लक्षणया समासमात्र परत्वेन समास एव प्रातिपदिकमित्यर्थः। समासेतर-सजातीय-व्यवच्छिन्नप्रातिपदिकत्ववान् समास इति यावत्। तत्र व्यवच्छेदमात्रस्य विधेयत्वोपगमे निषेधमुखेन प्रवृत्तिः प्रातिपदिकत्वस्य विधेयत्वानावश्यकत्वात्। यदि तु समासेत्तर-समास-सजातीय-व्यवच्छेदविशिष्ट प्रातिपदिकत्वस्य विधेयत्वमभ्युपगम्यते, प्रातिपदिकत्वस्य सिद्धत्वेऽपि विशिष्टस्य तस्याऽसिद्धत्वात् तदा विधिमुखेन प्रवृत्तिः। अस्मिन् पक्षे समाससजातीयभिन्नत्वेनार्थं-वत्सूत्रे संकोचात् समासस्य वा तत्सजातीय वाक्यस्य वा प्रातिदिकत्वाऽप्राप्तौ समास-स्यानेन प्रातिपदिकत्वं, वाक्यस्य तु न केनापीति सर्वमवदातम्। यदि चानेन व्यवच्छेदो न विधीयेत तदा समास ग्रहणकृत नियमेन मूलकेनोपदंशमित्यादेः कृदन्तत्वात् प्राप्तस्य प्रातिपदिकत्वस्य व्यवच्छेदो न स्यात्। अथ नियमानामपि विधायकत्वे विधिनियम सम्भवे विधिरेवज्यायानिति सिद्धान्तः किं मूलकः स्यादितिचेद्उच्यते, नियमत्वोपगमे विशिष्टस्य विधेयत्वं, विधिशास्त्रत्वे तु न तथेति लाघवमेव तन्मूलम्।

यत्तु एवकारः प्रमाणान्तरप्राप्तत्वद्योतको नत्वन्ययोगव्यवच्छेदस्येति तन्न, चैत्रस्य सन्ततिरस्ति न वेति पृष्टे तस्य कन्यकैव सन्ततिरित्युत्तरवाक्यतोऽपि कन्येतर पुत्रादिसन्तानव्यवच्छेदप्रतीतेः।

तत्र च न केनापि प्रमाणेन कन्या प्राप्ता तस्मात् एवकारोऽन्ययोगव्यवच्छेदार्थक-इत्येवसम्यक्।

यद्यपि नागेशमते सर्वत्र नियमशास्त्रस्य विधायकत्वमेव, तथापि दीक्षितादिमते निषेधकत्वमपीति तन्मतानुसारेणापि संकोचो निर्वक्तव्य एव।

ननु स्थानिवत्सूत्रेण कार्यातिदेशपक्षे तथा संकोचसम्भवेऽपि निमित्तातिदेशे तदसम्भव इति चेद् अत्रोच्यते निमित्तातिदेशोऽपि तन्निमित्तकार्यार्थं एवेति आदेशः स्थानिधर्मप्रयुक्तकार्यसम्पादक इत्यर्थे एव निमित्तारोपमन्तरेणैव पर्यवसानम्। इयानेव विशेषः कार्यातिदेशे कार्यम्, निमित्तातिदेशे तु आरोपद्वारेति। यद्वा निमित्तातिदेशे। आदेशः स्थानिधर्मप्रकारकारोपविशेष्य इत्यर्थः, तत्रारोपे लुप्तप्रत्ययवृत्ति धर्मनिमित्तककार्यसम्पादकत्वेन संकोचोविधेयः।

एतेन विधेयैक्ये निमित्तत्वमिति यदुक्तं तस्य प्रत्ययलोप सूत्रेव्यभिचारशंकाऽप्यपास्ता, स्थानिवत्सूत्रप्रत्ययलोपसूत्रयोर्विधेयस्यापाततो भेदप्रतीतावपि वस्तुतऐक्यस्यैव पर्यवसानात्। किञ्च विधेयैक्ये निमित्तत्वमित्युक्तेरयमाशयः स्वशास्त्रबलाद्यादृशं रूपं साधनीयं तादृशरूपस्यापरशास्त्रेणापिसिद्धौ नित्यत्वमिति।

—*❀□❀*—

## सूक्तयः

विद्यां च विद्यां च यस्तद्वेदोभयँ सह ँ।
अविद्यया मृत्युंतीर्त्वा विद्ययाऽमृतमश्नुते ॥

× × ×

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे।
धर्मादर्थश्च कामश्च स धर्मः किन्न सेव्यते ॥

× × ×

सर्वेषामेव शौचानामर्थंशौच परंस्मृतम्।
योऽर्थे शुचिः स हि शुचिर्नमृद्वारिशुचिः शुचिः ॥

× × ×

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद् विद्वाँस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥

—❀[◈]❀—

# महाभाष्यविमलाटीकाया वैशिष्ट्यम्

पातञ्जलमहाभाष्यस्य संस्कृतवाङ्मये विशिष्टं स्थानं वर्तते। पाणिनीयाष्टकस्य कात्यायनवार्तिकस्य च व्याख्यानमुखेन महाभाष्ये सर्वेषां शास्त्राणां प्रायः सकलसिद्धान्तानां दिग्दर्शनं कृतमस्ति। संस्कृतवाङ्मये सत्स्वनेकभाष्येषु महाभाष्यपदेन पातञ्जलमहाभाष्यस्यैव ग्रहणं भवति। अस्य महत्त्वविषये नागेशेनोक्तमुद्योतस्य प्रारम्भे[1] "व्याख्यातृत्वेऽप्यस्येष्ट्यादिकथनेनान्वाख्यातृत्वादितरभाष्यवैलक्षण्येन महत्त्वम्" अर्थात् पाणिनीयसूत्राणां कात्यायनवार्तिकानाञ्च व्याख्यानेन सहैव महाभाष्ये, इष्टिः, उपसंख्यानम् वचनम्, वक्तव्यम् इत्यादीनां बहुषु स्थलेषु नवीनवार्तिकान्यपि उक्तानीत्येतद्भाष्यान्तरापेक्षया विलक्षणमिति महाभाष्यमित्यभिधीयते। 'यथोत्तरं मुनीनां प्रामाण्यम्' 'इति वचनानुसारेण पाणिनीयव्याकरणेऽद्यत्वे भाष्यकारोक्त्यैवव्यवस्था सूत्रवार्तिकभाष्येषु मतभेदोजायते इति तु नाविदितं केषाञ्चिद् विदुषाम्। महाभाष्यस्य भाषा कथनोपकथनरूपेति सरला, प्राञ्जला च सत्यप्याशयोऽतिगम्भीर इति अभियुक्तैरुक्तम्—

"गम्भीरमर्थंदृष्ट्या तु प्रसन्नं शब्दसौष्ठवात्"। इति।

अतः महाभाष्याशयस्फोटनायास्यानेके व्याख्याग्रन्थाः सन्दृब्धा मनीषिभिः। संस्कृतव्याकरणशास्त्रेतिहासे युधिष्ठिरमीमांसक[2]—महोदयैः भर्तृहरिकृतमहाभाष्यदीपिका सहिताः चतुर्विंशतिः टीकाकाराणां टीकाग्रन्थाः प्रदर्शिताः। येषु उद्योतस्य, छायायाः तत्त्वालोकस्य, विमलायाश्च अध्यायान्तरे प्रदीपटीकारूपेण निर्देशः कृतोऽस्ति। तत्त्वालोकस्य, विमलायाश्च कुत्राप्युल्लेखो नास्ति।

सम्भवति 'व्याकरणशास्त्र का इतिहास' इति ग्रन्थलेखनकाले टीके इमे मीमांसकमहोदयसमक्षं नागते भवेताम्। सम्प्रति संस्कृतभाषयोपनिबद्धासु प्रकाशितासु टीकासु कैयटकृतप्रदीपः, नागेशकृतोद्योतः, वैद्यनाथपायगुण्डस्य छाया, पण्डितमहेशझा विरचितविमला, पं०रुद्रधरझाकृततत्त्वालोकश्च प्रसिद्धाः सन्ति। तत्र प्रदीपः, उद्योतश्च महाभाष्यस्य सर्वेषु पञ्चाशीतौ आह्निकेषु विद्येते। अपरास्तिस्रः टीकास्तु (१. छाया २, विमला ३. तत्त्वालोकः) आद्यनवाह्निकभागे एव वर्तन्ते।

उपर्युक्तासु टीकासु प्रदीपं विहाय केवलं 'विमला' एव महाभाष्ये स्वतन्त्ररूपेण विद्यतेऽन्यास्तु मुख्यरूपेण टीकोपटीकाः सन्ति। यथोद्योतः प्रदीपाशयमुद्योतयन् भाष्याशयमपिकचित्-कचित्स्पष्टयति। छाया तु उद्योताशयं प्रकटयन्ती कचिद्भाष्याशयं

---

१. महाभाष्य-पस्पशाह्निकम्

२. सं० व्या० शास्त्र का इतिहास- प्रथम भाग।

कचित् प्रदीपाशयं च प्रदर्शयति। तत्त्वालोकस्तु भाष्यस्य प्रदीपस्य, उद्योतस्य च तत्त्वोपवर्णने प्रवृत्तोदृश्यते।

तासु टीकासु प्रदीपोद्योतछायाटीकाः विमलातः प्राचीनाः, तत्त्वालोकस्तु अर्वाचीनः, प्रदीपोद्योछायासु सतीष्वपि विमलायाः प्रणयनं मिथिलादेशीयः विहारप्रान्ते मधुवनीमण्डलान्तर्गतगंगोलीग्रामवास्तव्यः, श्रोत्रियकुलावतंसः प० श्रीमहेशझाशर्मा अकार्षीदित्यत्र किंचिद् वैशिष्ट्यं भवेत्। यतो हि नवीनटीकासु प्राचीनटीकातो वैशिष्ट्य एव विदुषां छात्राणां चाकर्षणम्। उक्तमपि 'सिद्धे वस्तुनि नेच्छा किन्त्वसिद्धे'' रिति। अर्थात् कस्यापि ग्रन्थस्य निरूपणीयो विषयो यावन्न कमप्यपूर्वमर्थमभिधत्ते प्रकाशयति वा तावन्न तस्य साफल्यमितिधिया विमलाटीकायामपि किमस्ति प्राचीन-टीकाभ्योऽपूर्वत्वं वेति विवेचनीयमत्र। विना तद् विवेचनेन न कस्यापि विवेकि-नस्तट्टीकायां प्रवृत्तिः भवितुमर्हति।

विमलाटीकाया अवलोकनेन यानि वैशिष्ट्यानि दृष्टिपथमायातानि तेषु-प्रामुख्ये-नेमानि सन्तिः—

१. अपेक्षितेऽपि व्याख्येयस्थले यत्र केनापि पूर्वव्याख्याकारेण न किंचिद्व्याख्या-तन्तत्रापि व्याख्यानेन भाष्याशयप्रकटनमस्याः प्रथमं वैशिष्ट्यम्।

यथा—'वृद्धिरादैच्'[1] इति सूत्रव्याख्यानक्रमे वृद्धिसंज्ञाया आदैचोश्चान्योन्या-श्रयवारणाय 'सिद्धं तु नित्यशब्दत्वात्' इति समाधानानन्तरं 'यदि तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम् ?'' इत्याक्षेपभाष्यस्य समाधानभाष्यं वर्तते—'किमर्थं शास्त्रमति चेन्निवर्तकत्वात् सिद्धम्। निवर्तकं शास्त्रम्॥ कथं ? मृजिरस्मायाविशेषेणोपदिष्टः। तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता। तत्रानेन निवृत्तिः क्रियते, मृजेरक्ङित्सु प्रत्ययेषु मृजिप्रसङ्गे मार्जिः साधुर्भवति''॥ इति। अत्र केनापि व्याख्याकारेण किञ्चिदपि नोदलेखि। अतः ''अस्मै'' 'अविशेषेण'' ''उपदिष्टः'' इत्यादिपदानामर्थावबोधः स्पष्टो न भवति। विमलायान्तु भाष्यस्याशयो निम्नलिखितेन व्याख्यानेन स्पष्टो जायते। एवमस्ति अत्रत्या विमला—''अस्मै—साधुशब्दजिज्ञासवे। अविशेशेण = प्रत्ययविशेषा-नाश्रयेण। उपदिष्ट इति 'मृजू शुद्धाविति धातुपाठ उपदिष्ट इत्यर्थः। तस्य—साधुशब्द-जिज्ञासोः। सर्वत्र-क्ङित्सु तद्भिन्नेषु च। तत्र-तस्मिन् सति। अनेन = मृजेर्वृद्धिरिति सूत्रेण॥'' इति।

एवमेव नवेति विभाषा[2]' इति सूत्र—व्याख्याप्रसङ्गे अप्राप्तविभाषासु प्राप्ते, अप्राप्ते उभयत्र वेति कोटित्रयप्रकारकसन्देहस्थलान्युक्तानि, तेष्वेकमस्ति—'अनुपसर्गाद्

१. महाभाष्यम्-तृतीयाह्निकम्-सूत्र सं०-१-१-१।
२. महाभाष्यम्, षष्ठाह्निकम्।

वा इति सूत्रम् । तत्रास्त्येवं भाष्यम्—'प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं वा प्राप्ते ? कथं वाऽप्राप्ते कथं वोभयत्र ? 'वृत्तिसर्गतायनेषु क्रमः' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥ अप्राप्ते । वृत्यादिष्विति निवृत्तम् ॥ इति भाष्यस्याशयः केनापि व्याख्यात्रा नोद्घाटितः। परन्तु विमलाकारेण भाष्याशय उद्घाटितः, स चैवम्—

"वृत्तिसर्गतायनेषु क्रमः 'इति—अयम्भावः" अनुपसर्गात् क्रमः आत्मने पदविधायके 'अनुपसर्गाद् वा" इति सूत्रे 'वृत्तिसर्गतायनेषु क्रमः "इति सम्बद्धयते, एवञ्च वृत्यादौ नित्यात्मनेपदस्य प्राप्तावेव 'अनुपसर्गाद्वा, इत्यनेन विकल्पविधानात् प्राप्त विभाषात्वम् । अथ 'वृत्तिसर्गतायनेषु इति न सम्बध्यते तदा सोपसर्गे चरितार्थस्य 'वृत्तिसर्गे'ति नित्यात्मनेपदस्य, वृत्यादिरहिते चरितार्थस्य 'अनुपसर्गाद् वा' इति विकल्पस्यानुपसर्गे वृत्यादौ प्राप्तौ पूर्वविप्रतिषेधेन नित्यात्मनेपदस्यैवेष्टत्वे वृत्यादिरहिते एव विकल्पः प्रवर्ततेत्यप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे वृत्यादिषु प्राप्तविभाषात्वम्, वृत्यादिरहिते अप्राप्तविभाषात्वमिदमुभयत्र विभाषात्वम् इति कोटित्रयप्रकारकः सन्देह उपपद्यते इति ।

अत्र प्राप्तविभाषात्वम्, अप्राप्तविभाषत्वं च सूपपाद्यम्, परन्तु विमलां विनोभयत्रविभाषत्वं दुरुपपादमासीदन्यव्याख्यानुपलम्भात् । एवमेव अस्मिन्नेव प्रकरणे प्रायः सर्वेषु अप्राप्तविभाषास्थलेषु कोटित्रय प्रकारकसन्देहस्योपपादनं यथा दृश्यते विमलायां न तथा पूर्वटीकासु ।

एवमेव 'न धातुलोप आर्धधातुके'[1] इत्यत्र आर्धधातुके 'इति किमर्थम्' इत्याद्यनेकभाष्यस्थालानामुपपत्तिः केवलं विमलायामेवदृश्यते इत्यस्त्यस्या वैशिष्ट्यम् ।

२. कतिपयस्थलेषु भाष्यस्योपपत्तिर्विमलायां पूर्वाचार्यकृतव्याख्यानापेक्षयाऽपररीत्या व्याख्यानेन दृश्यते इति द्वितीयं वैशिष्ट्यम् :—

यथा—'वृद्धिरादैच्'[2] इति सूत्रे 'किं पुनरिदं तद्भावितग्रहणम्—"वृद्धिरित्येव ये आकारैकारौकारा भाव्यन्ते' तेषां ग्रहणम् ? आहोस्विदादैज्मात्रस्य ? इति भाष्यस्थप्रश्नस्योपपत्तिः कैयटेन एवं कृतास्ति—'किं पुनरितिउभयथा शास्त्रे दर्शनात् प्रश्नः" इति । अत्र प्रश्ने एका शङ्कोत्पद्यते यद् वृद्धिरिति शब्देन विहिता आदैचो वृद्धिसंज्ञका इति सूत्रार्थसत्त्वे एव तद्भावितग्रहणविषयकप्रश्नस्योपपत्तिर्भवितुमर्हतीति तादृशः सूत्रार्थश्च वृद्धिरितिपदद्वयसत्त्वे एव सम्भवति, तच्चनास्ति सूत्रे, तत्कथं प्रश्नः ? यद्यप्यस्याः शङ्काया समाधानं कृतमस्ति उद्योते, "वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भा-

---

१. महाभाष्यम्-चतुर्थाह्निकम्—१-१-४

२. महाभाष्यम्—तृतीयाह्निकम् ।

वितग्रहणम् । वृद्धिशब्दस्यैकत्वे द्वितीयः पक्ष इति भावः ।।" इत्युक्त्या तथापि स्पष्टोपपत्तिर्यथा दृश्यते विमलायां सा प्रशंसनीया । तथाहि विमलायां तद्भावितग्रहणमिति प्रतीकमादाय व्याख्यातम्—वृद्धिपदमावर्तते, तत्रैकं वृद्धिपदं वृद्धिशब्देन विहितपरम् । तच्चादैचो विशेषणं, तथा च वृद्धिशब्देन विहिता ये आदैचस्ते वृद्धिसंज्ञका इति व्याख्यानेनेति भावः ।।" एवञ्च तद्भावितग्रहणविषयकप्रश्नः स्पष्टमुपपन्नो भवति ।

एवमेव 'स्थानिवदादेशोऽनल्विधौ'[1] इति सूत्रसत्त्वे ब्रूञ्धातोर्लटि मध्यमपुरुषैकवचने 'ब्रू' इत्यस्य आहादेशे, सिपःथलि च कृते आत्थ' इत्यत्र स्थानिवत्त्वेन 'आह्' इत्यादेशे ब्रूञ्त्वमाश्रित्य 'ब्रुव ईट्' इत्यनेन ईट् प्राप्नोति, तथैव अस्धातोर्लुङि, तिपि, 'अस्तेर्भूः, इति सूत्रेण अस् धातोर्भू इत्त्यादेशे कृते, अटि च्लिप्रत्यये, तस्य सिजादेशे च कृते स्थानिवत्त्वेनं भू, इत्यादेशे अस्त्वमाश्रित्य 'अस्तिसिचोऽपृक्ते 'इत्यनेन ईट् प्राप्नोति । अतः उभयत्र ईटः प्रतिषेधाय 'आहिभुवोरीट्प्रतिषेधः" इति वार्तिकं कर्त्तव्यम् इति—प्रसङ्गे 'आत्थ' इत्यत्र 'आहस्थ. इत्यनेन झलादिथकारे परे थत्वविधानाद्ज्ञापयत्याचार्योयत् 'आहेरीड्न भवति 'इति तेन आहेरीट्प्रतिषेधोऽनर्थकः" इत्युक्त्वा भाष्ये अग्रे कथितम्—"भवतेश्चापि न वक्तव्यः । अस्तिसिचोऽपृक्ते इति द्विसकारको निर्देशः ।। अस्तेः सकारान्तादिति ।।" इति । अर्थात् अस्तेर्भूरित्यादेशे 'भू' इत्यस्य सकारान्तत्वाभावादेव ईट् न भविष्यतीति ईट्प्रतिषेधोऽनर्थकः । अत्र 'द्विसकारको निर्देशः' इति भाष्यस्य उद्योते एवं व्याख्यानमस्ति 'अस्तिस्सिच इति सूत्रपाठ इति भावः । प्रकारान्तरे तु आदेशेरपहारात् सद्वयोच्चारणाभावेन 'निर्देश' 'इति भाष्यास्वारस्यम्' ।। इति ।

केचित्तु 'द्विसकारको निर्देश' इति भाष्यानुसारेण सूत्रस्य अस्स्ति सिचोऽपृक्त्वे इति स्वरूपं मन्यन्ते ।

विमलायान्तु पूर्वाचार्यप्रदर्शितव्याख्याने दोषप्रदर्शन् पुरःसरमपररीत्या तत्सङ्गतिः प्रदर्शिता । तच्चैवम्—"न तावत् 'अस्स्ति सिचोऽपृक्ते । 'अस्स्' इत्यस्य धातुत्वाभावेनश्तिबनापत्तेः । पदमध्यप्रविष्टेन सकारेण सिचो विशेषणासम्भवे सिजाश्रयस्येटः प्रसक्तेश्च इत्यादिना 'अस्स्ति सिचोऽपृक्ते' इति सूत्रस्वरूपकथनं दूषयित्वा नागेशोक्तमपि सूत्रस्वरूपं दूषितमित्यग्रिमेण ग्रन्थेन—यदपि "अस्तिस्सिचोऽपृक्ते 'इति सूत्रपाठः । सकारस्य देहलीदीपन्यायेनोभयत्र सम्बन्धः । तथा च सकारान्तादस्तेः, श्रूयमाणसकारान्तात् सिचश्च परस्य इत्यर्थ इति न श्तिप्प्रत्ययानुपपत्तिः । यद्वा द्विसकारको निर्देश इति भाष्याक्षरस्वारस्यविरोध इति नागेशेनोक्तम्—तदपि नातिरमणीयम् ।। यतोहि द्विसकारको निर्देशः किं सूत्रकृता 'कृत' उतभवद्भिः करणीयः ? नाद्यः । तथा सति समाधानस्य पूर्वमेव ज्ञातत्वेनाक्षेपवार्तिकोत्थानानुपपत्तिः । नान्त्यः ।

१. महाभाष्यम्—तृतीयाह्निकम् ।

तथा सति पाणिनेन्यूनतापत्तिः किञ्च 'अस्तिस्सिचः' इति सूत्रपाठं सम्प्रदायावगत-लघुतोच्छिद्येत ॥ ततः विमलाकारेण स्वकीयं मतं प्रदर्शितम्—'किन्तु 'अस्ति सिचस्स्' इतिच्छेदः। एकस्य सकारस्य संयोगान्तलोपः।·········'अस्ति सिचोऽपृक्ते' इत्येव सूत्रपाठः। द्विसकारको निर्देश" इति भाष्यन्तु व्याख्यानगम्य द्विसकारक इत्यर्थकम्। एवञ्च व्याख्यानात् पूर्वशङ्का, व्याख्यानेन च तस्या निवृत्तिरिति न महर्षीणां न्यूनतेत्यवधेयम्। इति ग्रन्थेन। व्याख्यानञ्च 'अस्तिसिचस्स् अपृक्ते ''इतिच्छेद एवेति भावः। एवं छेदे प्राप्तशङ्कानां समाधानञ्चेत्थं कृतमस्ति विमलायामेव—'स्' इत्यस्य संयोगान्तपदत्वाभावेन लोपानापत्तिवारणं तु 'संयोगान्तस्य सतः पदान्तस्य 'इति संयोगान्त लोपसूत्रार्थकरणेन कृतम्। रोरुत्वे कर्त्तव्ये संयोगान्त लोपस्यासिद्धत्व-वारणं तु 'संयोगान्तलोपे रोरुत्वे" इति वार्तिकेन 'हरिवो मेदिनं त्वा' इत्यादि—वदसिद्धत्वनिषेधात् कृतम्। संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्' इति। संयोगान्त-लोपसूत्रार्थे तु अस्तिसिचस् स् + अपृक्ते" इतिच्छेदे द्वयोः सकारयोः पर्यायेण रुत्वे कृते 'अतोरो' रित्यनेनैक एवोकारो भविष्यति। विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद् विवक्षितत्वात्; रोरिति जातिपरनिर्देशेनातः परत्वस्य पूर्वत्वस्य च सम्भवात्। जाति-परत्वे च प्रकृतनिर्देश एव प्रमाणम्। न च परत्वाद् 'हशि च' इति प्रथमस्यैव (अस्ति सिच र् र् अपृक्ते इत्यवस्थायाम्) रोरुत्वं स्यादिति वाच्यम्, रुत्वस्यासिद्धतया हश्परत्वाभावात्। न चाश्रयात् सिद्धत्वमिति वाच्यम्, स्थान्यंशे तथात्वेऽपि निमित्त-भूतहशंशे तदसम्भवात्।

एवं दृश्यते यथा विमलायां 'द्विसकारको निर्देश" इति भाष्यस्य निर्दुष्टोपपत्तिः कृतास्ति न तथान्यासु व्याख्यासु अस्तीदमस्या वैशिष्ट्यम्।

३. बहुत्र महाभाष्यस्य तत्तत्सन्दर्भस्यैकत्र सारांश उपस्थापित इति विमला-टीकायास्तृतोयं वैशिष्ट्यम्। यथा 'वृद्धिरादैच्[1]' इत्यत्र 'किं पुनरिदं तद्भावित-ग्रहणम्।·····················आहोस्विदादैज्मात्रस्य' इत्यत्रत्यसकलसन्दर्भस्य सारांशः प्रदर्शितो विमलायामेवम्—"तथा चायं निर्गलितोऽर्थः—आवृत्तौ गौरवापत्तेः, शालीयादेर-सिद्धितः। मालादीनां चेतिलिङ्गाद् व्याप्तिन्यायात्तथैव च ॥ भाविसंज्ञात्वविज्ञाने गौरवञ्चेह निश्चितम्। आदैज्मात्रस्याविशेषाद् वृद्धिविज्ञाविधास्यते ॥ इति।

एवमेव व्याकरणपदार्थनिश्चयप्रसङ्ग 'अथवा पुनरस्तु सूत्रम्' इति भाष्यमुपादाय तत्रत्यसकलसन्दर्भस्य सारांश एवमुपस्थापितो विमलायाम्—सूत्रस्य व्याकरणस्य पदार्थत्वे 'व्याकरणस्य सूत्रम् 'इत्यत्र वनस्यायं वृक्ष.' इत्यादाविवावयवावयविभावसम्बन्धे षष्ठीति व्याकरणस्य सूत्रमिति व्यवहारः, व्याख्यानस्यापि सूत्रार्थमात्राभिव्यञ्जकत्वेन 'व्याकरणाच्छब्दान् प्रतिपद्यामहे' इति व्यवहारश्चोपपद्यते। लक्ष्यलक्षणसमुदायस्य

१. महाभाष्य-तृतीयाह्निकम्।

व्याकरणपदार्थत्वे सूत्रमात्रमधीयाने वैयाकरणशब्दप्रयोगः 'तैलं भुक्तम्' इत्यादाविव भाक्तत्वेनोपपादनीय इत्युभयत्रैव दोषस्य परिहारसम्भवादुभयत्रैव व्याकरणपदार्थत्वमिष्ट-मिति भावः" ॥ इति

४. गूढविषयस्यापि सरलभाषयोपस्थापनमस्याः चतुर्थं वैशिष्ट्यम् । यथा 'वृद्धिरादैच्' इति सूत्रे कः संज्ञी ? का संज्ञा ? इति सन्देहनिराकरणप्रसङ्गे महाभाष्ये 'लघ्वर्थं हि संज्ञाकरणम्' इत्युक्त्वा 'तत्राप्ययं नावश्यं गुरुलघुतामेवोप-लक्षयितुमर्हतीति । किंतर्हि ? अनाकृतितामपि 'इति भाष्यस्य यो गूढाशयस्तस्योद्घाटनं विमलायामेव दृश्यते । तत्र हि एवं व्याख्यातम्—अयं = सूत्रकारः, अवश्यं = नैयत्येन, गुरुलघुतामेव = संज्ञासंज्ञित्वव्यवस्थापकत्वेनेति शेषः । उपलक्षयितुम् = स्वीकर्तुं नार्हति = न शक्नोति । अनाकृतितामपीति—एवञ्चोपसर्गसंज्ञासर्वनामसंज्ञा-सम्प्रसारणसंज्ञाकर्म-प्रवचनीयसंज्ञादौ न दोष इति बोध्यम् ॥ इति ।

विमलानुसारेण भाष्यस्य एवमाशयः प्रकटितः—यल्लघु सा संज्ञा, यद्गुरुः स संज्ञीति नियमो न स्वीकर्तुं शक्यते, उपसर्गादिमहासंज्ञाविषये संज्ञ्यपेक्षया संज्ञानां गुरु-त्वात् । अतः संज्ञासंज्ञित्वव्यवस्थापनाय एतदपि स्वीकरणीयं यद् य आकृतिमान् स संज्ञी, या अनाकृतिः सा संज्ञा इति ।

एवं बहुषु स्थलेषु भाष्यस्थगूढविषयस्य सरलभाषयोद्धाटनं दृश्यते विमलायाम् ।

५. बहुत्र प्रदीपोद्योतयोरपि तात्पर्यं विमलाटीकाध्ययनानन्तरमेव स्पष्टं जायते इत्यस्याः पञ्चमं वैशिष्ट्यम् । यथा "इकोगुणावृद्धी"[१] इति सूत्रे 'इग्ग्रहणं किमर्थम् ? इति भाष्ये उद्योते उक्तं यन्नागेशेन-गुणवृद्धिग्रहणस्योत्तरत्र निषेध्यसमर्पणायावश्यकत्वेऽपि इक्पदस्य 'इकः स्थाने' इत्यर्थार्थमावश्यकत्वेऽपि, योगविभाग-विषयकोऽयं प्रश्नो भाष्ये इग्ग्रहणमिति । तदपि विमलाया एवं व्याख्यानेन स्पष्टं भवति-गुणवृद्धीत्यस्य 'न धातुलोप आर्धधातुके' इति सूत्रे प्रतियोगिज्ञानार्थमावश्यकत्वेऽपि इग्ग्रहणं किमर्थम् । किञ्च गुणवृद्धीत्यस्योत्तरसूत्रमात्रार्थकत्वे 'गुणवृद्धी न धातुलोप आर्धधातुके' इत्येव वक्तव्ये पृथग्योगकरणं किमर्थमिति पृच्छति इग्ग्रहणं किमर्थमिति ।

एवमेव 'न वेतिविभाषा'[२] इति सूत्रे अप्राप्तविभाषास्थल प्रदर्शनप्रसङ्गे 'विभाषो-पयमने इत्यत्र कोटित्रयप्रश्नारकसन्देहोपपादनाय यत् कैयटेनोक्तं-"विभाषोपयमने" इति । यदा गन्धनाङ्गमुपयमनं गृह्यते तदा प्राप्ते, पूर्वप्रतिषेधे त्वप्राप्ते । परविप्रतिषेधे उभ-यत्र वेति सन्देहः" इति । तस्य तात्पर्यं विमलयैव स्पष्टं जायते । एवं ह्यत्रत्या विमला-अयम्भावः-स्वीकारे, विवाहे च यमः परस्य सिचः कित्त्वविधायके 'विभाषो-

१. महाभाष्यम्-तृतीयाह्निकम्—१. १. ३ ।
२. महाभाष्यम्-षष्ठाह्निकम् ।

पयमने' इति सूत्रे 'यमो गन्धने' इत्मनुवर्तते, तथा च सूचनपूर्वके विवाहे, स्वीकारे वा यमः परः सिच् किद्वेत्यत्र 'यमो गन्धने' इत्यनेन प्राप्त एव विभाषाविधानात् प्राप्तविभाषात्वम्। 'यमो गन्धने' इत्यस्याननुवृत्तौ गन्धनमात्रे चरितार्थस्य 'यमो गन्धने' इत्यस्य, विवाहमात्रे चरितार्थस्य विकल्पस्य, गन्धनपूर्वके विवाहे युगपत्प्राप्तौ पूर्वविप्रतिषेधेन 'यमो गन्धने' इत्यस्यैवेष्टत्वे गन्धनपूर्वकविवाहे प्राप्तविभाषात्वम्, शुद्धविवाहेऽप्राप्तविभाषात्वमित्युभयत्र विभाषात्वमिति कोटित्रयप्रकारकः सन्देह उपपद्यते इति।

एवञ्चान्यत्रापि बहुत्र प्रदीपाशयं नागेशकृतोद्योताशयञ्च मनसि निधाय सरलया सरण्या महाभाष्याशयम्प्रकटयामास विमलाकारः।

६. प्रतीयमानसिद्धान्तिभाष्यस्याप्येकदेशित्वसूचनं युक्त्या अस्या षष्ठं वैशिष्ट्यम्। यथा—'ङ्मेजन्त'[1] इति सूत्रे भाष्ये 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषायाः 'ग्रामणि कुलम्' इत्यत्र तुगभावरूपप्रयोजनमुक्त्वा तस्य पुनः "नैतदस्तिप्रयोजनम्, बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक्। असिद्धं बहिरङ्गमन्तरङ्गे" इत्यग्रिमेण भाष्येण निराकरणे पुनरस्मिन् विषये अग्रे किंचित्कथनाभावेनेदं सिद्धान्तिभाष्यं प्रतीयते। परन्तु विमलायां ग्रामणि कुलमित्यपि सन्निपातपरिभाषायाः प्रयोजनमिति प्रतिपाद्य प्रयोजननिराकरणपरभाष्यस्यैकदेशित्वं सूचितम्। इत्थञ्चात्रत्या विमला—"इदमत्रालोचनीयम्—ग्रामणि कुलमित्यत्र 'इको ह्रस्व' इति विहितस्य बहिरङ्गत्वेऽपि 'ह्रस्वो नपुंसके' इति विहितस्यापरनिमित्तकत्वेनान्तरङ्गतया तस्य तुकि कर्त्तव्येऽसिद्धत्वाभावेन तुको दुर्वारतयास्य परिभाषाफलत्वमुपपद्यते। न चात्र 'ह्रस्वो नपुंसके" इति सूत्रं परत्वाद् वाधित्वा 'इको ह्रस्व' इत्यनेनैव ह्रस्वत्वं स्यादिति, तस्य बहिरङ्गत्वेन बहिरङ्गपरिभाषयैवेष्टसिद्धिरिति वाच्यम्, एवमपि कुलं ग्रामणि इति वाक्यस्थग्रामणिपदे 'इको ह्रस्व' इत्यस्याप्राप्तेर्नपुंसकह्रस्वस्यैव वक्तव्यतया तस्य चापरनिमित्तकत्वेनान्तरङ्गतया बहिरङ्गपरिभाषया असिद्धत्वाभावेन सन्निपातपरिभाषाया एव शरणीकर्त्तव्यत्वात्। नपुंसकह्रस्वस्यान्तरङ्गत्वेन 'इको ह्रस्व' इत्यस्य तद्बाधकत्वासम्भवाच्च। न चानया ग्रामणिच्छत्रमित्यत्रापि तुकोऽभावापत्तिरिति वाच्यम्, अत्र तुगभावस्यैवेष्टत्वात्। अत एव सन्निपातपरिभाषादोषेऽत्रैतस्यानुक्तिरेतद्भाष्यस्यैकदेशयुक्तत्वमेवेति प्रतीमः। सन्निपातश्चात्र न केवलं पूर्वपदयोरेव किन्तुविशेष्यविशेषणभावोऽपीति नपुंसकह्रस्वस्यापि सन्निपातलक्षणत्वमित्यवधेयम्"। इति।

एवमेव अस्मिन्नेव प्रकरणे नलोपो वृत्रहभिः, उदुपधत्वमकित्त्वस्य निकुचिते, इत्याद्यनेकप्रयोजननिराकरणपरभाष्यस्यैकदेशित्वं प्रतिपादितं विमलायां तत्रैववालोकनीयं नितान्तं रमणीयं चात्रत्यं विमलोपस्कृतं भाष्यम्।

---

१. महाभाष्यम्—षष्ठाह्निकम्—१. १. ३९।

७. महाभाष्ये सम्भावितन्यूनतायाः परिहारोऽपि दृश्यते विमलायामिति सप्तम वैशिष्ट्यम्।

यथा—'इको गुणवृद्धि'[१] इत्यत्राक्षेपभाष्यं वर्तते—'किं पुनरयमलोन्त्यशेषः? आहोस्विदलोऽन्त्यस्यापवादः? इति। यस्यास्ति तात्पर्यं यस्मिन् विधिसूत्रे 'इको गुणवृद्धी' अलोऽन्त्यस्य" इत्युभयसूत्रयोः विषयत्वन्तत्र 'अलोऽन्त्यस्य' इत्यनेन 'इको गुणेवृद्धी' इति विशेषणरूपेणान्वेति, अथवा 'अलोऽन्त्यस्य' इति सूत्रं प्रबाध्य 'इको गुणवृद्धी' इत्यपवादत्वेन प्रवर्तते? शेष इत्यस्य विशेषणमित्यर्थः। अत्र भाष्ये द्वावेव पक्षावुपस्थापितौ परन्तु विमलायां सप्तपक्षान् सम्भाव्य तेषां सर्वेषां पक्षाणामनेन अनेन, अग्रिमेण च भाष्येणान्तर्भावं कृत्वा न्यूनत्वापत्तिर्वारिता। एवमस्ति अत्रत्या विमला-"यद्यपि शेषो वा शेषिभूता वा। तया सह समुच्चिता वा। वैकल्पिकी वा। विप्रतिषेधो वा। तदपवादो वा। पदोपस्थापिका वेतिसप्त पक्षाः सम्भाव्यन्ते तथापि तच्छेषिपक्षस्यापि बहुव्रीहिणा तच्छेषपदेनैव लाभसम्भवात् पृथग्नोक्तः। मिदङ्गान्त्यस्यैकश्च द्वयोरपि गुण इत्यर्थस्तृतीयः पक्षः, मिदङ्गान्त्यस्य मिदङ्गावयवस्यैकः (वा) गुण, इत्यर्थश्चतुर्थः पक्षश्च अङ्गस्येति षष्ठ्याः स्थानत्वावयवत्वेनोभयार्थकत्वाभावेनासम्भवदुक्तिकत्वान्नोक्तः। तदपवादस्तूक्त एव। पूर्वविप्रतिषेधपक्षोप्यग्रे दूषयिष्यते, पदोपस्थितिपक्षश्च सिद्धान्तयिष्यत इति भाष्यस्य न न्यूनतेत्यवधेयम्"॥ इति।

एतत्सम्भावितन्यूनतायाः प्रदर्शनं परिहारश्च अन्यस्यां कस्यामपि टीकायां नावलोक्यते। एवमन्यत्रापि एतद्वैशिष्ट्यं द्रष्टुं शक्यते विमलायाम्।

एवं विवेचनया सिद्धयति यत् विमलाटीकायां विद्यते पूर्वाचार्यकृतटीकाभ्योऽपूर्वत्वं वैशिष्ट्यं वा। यद्यपि अस्याः वैशिष्ट्यमधिकृत्य शोधप्रबन्धोऽपि रचयितुं शक्यते तथापि संक्षेपेणेह सुधियां मनोविनोदाय समुपस्थापितमत्रत्यं वैशिष्ट्यम्।

आशासेऽनया विवेचनया महाभाष्यतात्पर्यंबुभुत्सवो विद्वांसो, जिज्ञासवश्छात्राश्च विमलाटीकया परिचिताः सन्तः टीकाकर्तुः श्रमं सफलयिष्यन्ति।

टीकेयं स्वयं टीकाकारेण पं० महेश झा शर्मणा संशोध्य वाराणसेयश्रीसीतारामसुद्राणालये बजरङ्गबलीद्वारा मुद्रापयित्वा १९३५ तमे ईशवीये वर्षे प्रदीपोद्योतसहिता प्रकाशिताऽऽसीत्। अद्य तु सा दुर्लभप्राया जाता पुनर्मुद्रणमपेक्षते, येन व्याकरणतत्त्वजिज्ञासूनां छात्राणां विदुषाञ्च महानुपकारो भवेदित्यलं विज्ञेषु।

सुरेश्वर झा
२१-१२-१९८८ ई०

---

१. महाभाष्यम्—तृतीयाह्निकम्—१. १. ३।

# प्रकाण्डपण्डित स्व० महेश-झा शर्मणां परिचयः

पं० महेश झा शर्मा विंशशताब्द्या मध्यभागे काशी-मिथिला-बंगादिक्षेत्रेषु प्रख्यात-शास्त्रार्थिषु लब्धप्रतिष्ठः सर्वविपश्चित्परिचितो मान्यग्रन्थकारः सफलाध्यापकश्चासीत्। असौ हि अधिमिथिलं सरिसवग्रामसमीपे गंगौलीग्रामे "पाली" संज्ञक-वत्सगोत्रीय-विद्वन्मण्डित-सत्कुले श्रोत्रियान्ववाये आषाढ़शुक्लत्रयोदश्यां १९०१ खृष्टाब्दे जनिमलभत। अस्य वंशक्रमः—महो० वंशधर—नै० उर्वीधरः—नै० गंगाधरः—वै० गुणधरः— वै० महेशः—श्री भवेशः (अधिवक्ता) पं० महेशशर्मणः पितृव्यो वर्षकृत्यमन्त्रार्थसंग्रहादि-विशालग्रन्थानां रचयिता मीमांसकशिरोमणिरासीत्, पितृव्यजो भ्राता च पण्डित प्रकाण्ड स्व० रमेशझा अतुलनीयः शास्त्रार्थी आसीद् यस्य ज्येष्ठः पुत्रः पं० श्री खगेश झा विद्यावारिधिः पातेपुर ग्रामस्थसंस्कृतमहाविद्यालये प्राचार्यो वर्त्तते। पं० महेश शर्मणो मातामहो "नरोन" कुलसम्भूतः कविवरआदिनाथ, मतुलौ च पं० श्रीनाथ–पं० गौरीनाथौ प्रख्यातौ विपश्चितौ। इत्थं हि असौ विद्यापरिपूरितेऽमले कुले जन्म गृहीतवान्।

पं० महेशझाशर्मणः प्रारम्भिकी शिक्षा स्वमातृके महरैल ग्रामे महामहिमो-पाध्याय–पं० कलानाथझाशर्मणां सकाशे जाता। तदनु "राजग्राम" ग्रामे, तदनु लक्ष्मीवतीसंस्कृतविद्यालये "सरिसवग्रामे" शास्त्रार्थमहारथि पं० मार्कण्डेय मिश्राणां सकाशे जाता। एवं हि स्वजनपदे व्याकरणपारंगतो भूत्वा १९१८ ई० वर्षे विशेषाध्य-यनाय काशीं जगाम। तत्र दशवर्षाणियावन्न्याय-मीमांसा-वेदान्तादिशास्त्राणि अधीत्य विद्वद्गोष्ठीषु निर्मलं यशः प्राप्तवान् तत्रैतस्य गुरवः म० म० जयदेव मिश्रः, म० म० वामाचरणभट्टाचार्यः पण्डितराजराजेश्वरशास्त्री द्राविडश्च आसन्। असौ हि व्याकरण-तीर्थः, व्याकरणोपाध्यायः, न्यायाचार्यश्च जातः। स्वसमये सर्वविधवैदुष्यस्पर्धासु सदैव प्रथमो जातः। मुख्यतया एतस्याध्ययनस्थानं सरिसव ग्रामः काशी च, यत्र मिथि-लेशपट्टमहिषी लक्ष्मीवती भोजनावासादिव्ययं कृतवती। अतएव "विमला"–टीकां तस्यै एव समर्पयन् असौ लिखति—

श्रीलक्ष्मीश्वरसिंहो जज्ञे नृपो यशोधवलितानन्तः।
आर्या तदग्रमहिला, लक्ष्मीवती श्रीमती जयति॥

अधिसरिसवविद्यामन्दिरं यत्प्रसादाद्।
दुरधिगममधीतं शब्दतन्त्रं समन्तात्।
अतुलमहिमकाश्यां न्यायशास्त्रं च तस्याः
करविकसित-पद्मद्वन्द्वयोरर्प्यतेऽयम्॥ इति।

पं० महेशशर्मणोऽध्यापनस्थलानि निम्नांकितानि :—

१. संस्कृतविद्यालयः, वराही, सीता मढ़ी—वर्षत्रयम् ।

२. लक्ष्मीवती संस्कृत विद्यालयः, सरिसवः—वर्षपंचकम् ।

३. बनैली-राज-कलावती-सुरभारती संस्कृतविद्यालयः, सुलतानगंजम्, भागलपुरम् :—
प्रधानाध्यापकः—वर्षपंचदशकम् ।

४. विक्रमशिला वैदिक संस्कृत महाविद्यालयः, सुलतानगंजम्, भागलपुरम्—
प्राचार्यः—वर्ष दशकम् ।

५. मिथिला संस्कृत शोध संस्थानम्, दरभंगा—सप्त वर्षाणि ( विशिष्टविद्वान )—
१९७० ई० यावत् ।

इत्थं हि सुलतानगंजम् अस्य मुख्यं कार्यक्षेत्रम् । तत्रानेन एका प्रकाशन-संस्था "विमला-कार्यालयः" स्थापिता, तस्य स्वयं प्रबन्धक आसीत् । एतस्य स्वर्गवासः ३०-११-८३ ई० वर्षेऽभूत् । पं० महेश झा शर्मकृता ग्रन्थास्त्वेते ज्ञाताः सन्तिः—

१. पातंजलमहाभाष्य प्रतीपोद्योतव्याख्या "विमला" ( नवाह्निकम् )
सुलतानगंजतः प्रकाशिता १९३५ ई० वर्षे ।

२. एकोद्दिष्ट सारिणी — " "
३. वर्षकृत्यम् — " "
४. धातुसारः — " "
५. विषयतावादः — " "
६. जातिबाधकपरिष्कारः— " "
७. स्फोट निरूपणम् — " "
८. तर्कप्रदीपः ( मौलिकोन्यायनिबन्धः—पृष्ठ १०८ )
मिथिला विद्यापीठ, दरभंगातः १९७८ ई० वर्षे प्रकाशितः ।
९. लघुशब्देन्दुशेखरव्याख्या—कारकान्ता—अप्रकाशिता ।
१०. महाभारतव्याख्या चूर्णिका भीष्मपर्वान्ता— "
११. दारुविहंगमः ( विमानशास्त्रम् ) "

पं० महेश झा शर्मसुतस्य श्रीभवेशस्य पार्श्वे—( ग्रामः—गंगौली, पत्रा० राजे, द्वारा—मनीगाछी, जिला—मधुवनी ) वर्तन्ते ॥

# प्रतापतपनीयम्

सहृदयधुरीण साहित्याचार्यश्री गोविन्दपाण्डेयप्रणीतं "प्रतापतपनीय" नामकं राणाप्रतापस्य पावनं चरित्रमुपोद्वलयत्काव्यमिदं लघुकायमपि रसपरिपाकेन बन्धदार्ढ्येन विविधैरन्यैश्च तैस्तैरलङ्कारप्रभृत्तिभिः काव्यबन्धोपयुक्तैः साहित्यकं सनाथयद्भिरभिलष्यमाणैरपि दुरासदैरिहाहमहमिकया समुपनिपतद्भिरलङ्कृतकलेवरं महदपि वपुषा काव्यान्तरमतिशयानं लोचनरोचनं हृदयावर्जनजन्ययशोभासुरञ्च समीक्ष्य प्रसीदन्मना अहमस्य कवयितुः काव्यनिर्माणकौशलं विस्मयमिवावहे, आशासे चास्यकवेः काव्यान्तरमपि न चिरेणैव प्रकाश्यमानं समसामयिकानन्यानपि विदुषोऽत्र पथि पदमाधातुं प्रेरयितुं प्रभुर्भवेत् ।

भगवान् भूतभावनोऽस्य कवेःसर्वविधां समृद्धिमुपपाद्य काव्यकलाकौशल प्रकाशनशक्ति समेधयन् विश्वसन्तर्पण समर्थां सुरभारतीं नवंस्वरूपं समाश्रित्य विकसन्तीं विदध्यादिति कामयमानः ।

रामचन्द्र मिश्रः

राष्ट्रस्योन्नयनव्रताहितधियामुत्साहतेभृत्ता–
मन्यायाङ्कुरशुष्क दावदहनज्वालस्वरूपस्फुराम् ।
नानाप्रौढविपक्षकुलश्च जनताक्षेमार्थमावृण्वतां
मालायां तरलो जयत्यतितरां राणाप्रतापो जयी ॥ १ ॥

यः कुन्ताग्रलसत्सपत्न रुधिरस्रोतस्विनीवीचिभिः
पूतं भारतभूतलं प्रविदधद् वैदेशिकै र्दूषितम् ।
स्वातन्त्र्यं प्रतिभारतीयमनसं सान्द्रं मुदोऽऽदीपयत्
तं चारित्र्यचयाभिरामयशसं राणाप्रतापं श्रये ॥ २ ॥

यद् दोर्दण्डविखण्डितातुलबल सन्दिग्ध शीर्षव्यतो
नैकान् सन्धिविधीन् दिशत्यकबरः सम्राट् तदानीन्तनः ।
वज्रं वाहिमुखं प्रियं भवतु मे नोतेन सन्धिः क्वचिद्
वाचेत्थं प्रहरन्तमेनममलं राणाप्रतापं श्रये ॥ ३ ॥

सन्धित्साविफलत्वतः प्रकुपितं जेतुं हुमायूसुतं
स्वीयं संयुगकौशलं द्रढयितुं चारावलीकन्दरे ।
वासं गुप्ततया सुतादिसहितः कृत्वार्यभूमिद्रुहां
राणावंशशिरोमणिः प्रमथने लग्नः प्रतापःकृती ॥ ४ ॥

कालेऽस्मिन् भरतक्षितेः शुभमये भाग्येऽम्बरे लक्षितः
पीन प्रेङ्खितधूमकेतुरवनो विध्वंसमामन्त्रयन् ।
राष्ट्रक्षेममयीं मतिं वृतवतो राणाप्रतापस्य हा
वात्सल्येन मनोऽब्धिरस्थिरपदं संस्पृश्य सम्प्रापितः ॥ ५ ॥

एकस्मिन् दिवसे क्षुधाकुलतरा राणासुता रोटिकां
लब्ध्वायासवशात् कृशां तृणमयीं भोक्तुं यदैवोद्यता ।
हा हा तत्क्षणमेव कश्चिदधमो मार्जार आहृत्य तद्
भक्ष्यं क्वापि पलायितो झटिति सा चीत्कारमुच्चैर्व्यधात् ॥ ६ ॥

एकान्ते गिरिगह्वरे करतले राणाः कपोलं दधन्–
नानाचिन्तनचक्रचोरितमनाः स्वाधीनता प्राप्तये ।
स्वीयां देशदशां विपत्तिवलितां संस्मृत्य खिद्यन्मुहुः
स्फीतं संश्रुतवानमन्दकरुण, क्रन्दोद्धुरं तं स्वनम् ॥ ७ ॥

मर्माघातपरायणोऽयमसमः कर्णातिथित्वं गत–
श्चक्रे धैर्यधनं महीधरनिभं चूर्णं प्रतापस्य तत् ।
सन्तानार्ति विलोकनोद्वातमहादुःखौघपात्रात्मनः
कार्याकार्यविचारणाविरहितं जातं मनस्तस्य हा ॥ ८ ॥

नेत्राभ्यां गलदश्रुनिर्झरझरीव्याजेन तस्य द्रुतं
धैर्यं निःसरदार्यं सौभगविलोपायैव मन्ये ध्रुवम् ।
सम्प्रत्यान्तरवेदना विषमिता मर्माभिदालक्षिता
ग्रावान्तस्तलसुद्रवाय प्रबलं हेतुत्वमालिङ्गति ॥ ९ ॥

यद्गेहे मधुमाधुरीभरभृतां सुस्वादुनानारसो–
ल्लासस्फारमयादनीयविविधान्नाद्युत्तमानामहो ।
वस्तूनां, न रसग्रहाय सुहितः कौलेयकोऽप्युद्यत–
स्तस्यात्मीयजनोऽद्य दैववशतस्तल्लब्धुमुत्कण्ठते ॥ १० ॥

किं नानाजननेषु मत्कृतमहापापात्करोऽजागरीद्
यस्यायं हृदि शल्यसन्निभतमः पाकोऽधुनालक्ष्यते ।
जातं भूपविभूषणं निजसुताक्षुद्वारणेऽप्यक्षमं
धिङ्मां दूषितपौरुषं कुलरुजं वात्सल्यहीनंजनम् ॥ ११ ॥

गार्हस्थ्यं विततं विधाय पुनरप्येष श्रयेन्मौनितां
नैतच्छ्लाघ्यतरं भवत्यभिजनैः कार्यं जगत्यामिह ।
इत्यालोच्य भृशं विगर्हितवतात्मानं प्रतापेन तत्
सन्धित्सा सफलत्वनिर्णयकृते चेतो व्यधायि स्थिरम् ॥ १२ ॥

राष्ट्रक्षेमविचारचारुहृदयाः कुर्वन्तु मेऽनादरं
म्लानिं यातु मदीयविश्रुतयशः पुष्पप्रतानं पृथु ।
ग्लानिं गच्छतु गौरवं कुलभवं मद्दोषतोवाऽचिरं
क्लेशं नात्मजनुर्गतं क्षमतरो द्रष्टुं विसोढुञ्च तम् ॥ १३ ॥

धन्यं पक्षिकुलं कुलञ्च सकलं धन्यं पशूनां सदा
यत्सन्तानवियोगजक्लमलवं वोढुं न वा कांक्षति ।
प्राणेभ्योऽपि गरीयसीं तनुजनिं यो नेक्षते स्नेहत-
स्तं धिङ्मानवपाशमस्तविभवं नैष्ठुर्यं निष्ठावहम् ॥ १४ ॥

आनन्दाङ्कुरमेधयन् नयनयोस्तृप्तेः सुधां वर्षयन्
पित्रोर्जीवनसौभगं प्रबलयन् वात्सल्यमुद्दीपयन् ।
संसारश्रमस्वेदविन्दुनिकरं दृष्टः क्षणाल्लोपयन्
सन्तानाख्यसुरद्रुमोऽसुदयितः कस्यास्ति रक्ष्यो न वा ॥ १५ ॥

लोके यस्य वपुर्विलोकनपरिष्वङ्गाद्भूतानन्दथ-
क्षीराब्धेरवगाहतुन्दिलहृदः सन्तोऽपि ये मानवाः ।
तस्यापत्यजनस्य दुःखदलने सौख्यप्रदाने च हा
नो सामर्थ्यंजुषो भवन्ति, नितरां तेऽधन्यधन्या ध्रुवम् ॥ १६ ॥

यद् वाचां वलनं निरर्थकमपि स्नेहाद्वमत्यश्रमं
निर्मूलान्यपि चेष्टितानि पितरौ कुर्वन्ति यस्यानिशम् ।
तद्रत्नं सुतसंज्ञकं भवति मेऽत्यन्तं व्यथाभाजनं
धिग् राज्ञां प्रभवं कुलेऽनवहितं मां निन्दनीयं जनम् ॥ १७ ॥

कृत्वाङ्केऽस्फुटवाचमात्मजमधः कुर्वन्नहो स्वःसुखं
धन्यं जन्म विपद्भरैकभवनेऽप्यस्मिन्नृलोके निजम् ।
मत्वात्मानममन्दभाग्यसुभगं जानन् सगर्वं पिता
संसारं सुखसिन्धुमूलममलं सत्यापयत्यन्वहम् ॥ १८ ॥

पित्रोर्वत्सलतानिमग्नमनसोरङ्के स्थितो बालक-
श्चश्चच्चन्द्रमसं विहायसि करेणादातुमुद्यन्मुहुः ।
काङ्क्षां प्रीतिमयीं लताङ्कुरततिं नोद्भावयत्यञ्जसा
मन्येऽपत्यवतामिदं क्षितितलं पीयूषपूरप्रसु ॥ १९ ॥

सन्तत्याः सुखसन्ततिप्रविततान्तर्जातमाकस्मिकं
तत्कातर्यं विनिर्गतासहशुचां बोधापहारं कुलम् ।
राणावंशसुधांशुलाञ्छनकरं राहूपमं ते नृपं
सन्धेर्बोधकपत्रमारचयितुं सम्प्रेरिरत् सत्वरम् ॥ २० ॥

ऊर्ध्वं निक्षिपताक्षिणी धृतवता पत्रंद्रुतं पाणिना
लेखन्या लिखितुं परेण लपितं किञ्चि प्रतापेन नो ।
रे व्योमन्नुपहस्यतां स्वनवता वातेन निःसाध्वसं
सूर्योपि स्वकरैः करोतु सबलं रोधश्चकार्यादितः ॥ २१ ॥

पत्रैः कम्पनशालिभि र्घनवनी तर्जा सृजेद् भैरवीं
सर्वं प्राकृतिकं जगद् विहसतु क्षीणेतरन्नो भयम् ।
नो लज्जा न कुलीनता रुचिमती दूरे कृताशिष्टता
वात्सल्यं निजवत्सदैन्यदलितान्तर्जातमेकं प्रियम् ॥ २२ ॥

किं मे कार्यमिदं कुलोज्ज्वलविभालोपाय संदृश्यते
हिन्दूत्तुङ्गगुरुत्वगर्वगिरये वज्रायते वाऽचिरम् ।
क्षत्रत्वक्षयकारि सञ्चितयशोद्युत्कारकारक्षमं
स्याद्वैतद् विलिखामि वत्सलतया वैवश्यमापादितः ॥ २३ ॥

पत्रार्धे लिखिते प्रहर्षपुलके दिल्लीश्वरस्य स्फुटं
हेतौ भाविनि लोचनाञ्चलगते राणाप्रियायाः क्षणात् ।
निर्बन्धं कटुभेषजोपममलं वाचां कदम्बं गलद्
राणामानसमन्थनाय समभूदेतत्तु मन्थाचलः ॥ २४ ॥

स्वीयैः प्राक्तनपूरुषैरविदितः कौलीन्यकूलङ्कष-
श्चित्ते गर्ह्यविचार उद्भवमितः कस्मादकस्मादयम् ।
नूनं पूर्वजनुर्गतोऽधमतम कर्मप्रपञ्चोऽधुना
दानायोद्यत एव कुत्सित फलस्यास्तेतरामन्तिके ॥ २५ ॥

सन्मार्गप्रतिलोमतामुपदिशनुद्दामपातं दिशन्
सत्कर्माध्वरदीक्षितान् क्लमयितुं सामर्थ्यसारं वहन् ।
आन्ध्यं वर्षयितुं कुहूत्करनिभो राष्ट्रद्रुहां प्रीतये
कोऽयं तेद्यतनो विषं वितनुते वैचारिको निर्णयः ॥ २६ ॥

त्वद् दोर्दण्डबलञ्च शात्रवकुलाद् येषां सदा रक्षकं
येषां त्वच्चरितं समुन्नतपदारोहाय निः श्रेणिकम् ।
येषां तेऽमलभावबन्धुरमहोद्देश्यञ्च सत्प्रेरकं
तेषामाशु तवैष दुःसहतरस्तापप्रदो निश्चयः ॥ २७ ॥

सञ्जातेन गरोपमेन गरिमा दष्टो न किन्तेऽमुना
कम्पंभीतिभरं न वाऽतनुतरं स्रष्टुं क्षमोऽभूदसौ ।
वक्षो दीर्णतरं व्यधान्नहि किमु त्वन्निश्चयोऽयं द्रुतं
कस्मादेष भवत्यहो अपयशः सर्जैकदुर्भाजनम् ॥ २८ ॥

येनेयं भरतावनिर्बहुमता सौभाग्यभाग्योज्जवला
साध्वाचारपरम्पराऽभयपदं प्रापायतोवाऽचिरम् ।
भक्ती राष्ट्रियतारसोर्मिभरिता भागीरथी वा यत-
स्तं त्वामद्य विलोक्य हन्त विमतं जीवेयुरेताः कथम् ॥ २९ ॥

झञ्झावातझरे प्रचण्डगतिके शब्दोद्धुरे भैरवे
वर्षग्रावगणोपबृंहितभयोत्कम्पोत्करेऽकम्पितः ।
दृष्टो यो नगराजराजिगुरुवत् स त्वं महादुर्बलः
किं दौर्बल्यमनीप्सितं निजभुवो बन्धाय नैतत्क्षमम् ॥ ३० ॥

ज्ञातुं नो प्रभवामि नाथ हृदये कोऽयं तवोपप्लवः
येनेयं धरणी तलातलतले पातोन्मुखा लक्ष्यते ।
गर्जासर्जनतर्जनोद्भटनभोदेशोऽपि दीर्णो विभा-
त्येतद् भारतभूतलं रिपुजनाधोनीकरिष्यन्निव ॥ ३१ ॥

भीते दिग्गजमण्डले गिरिगणे व्याकम्पितान्तस्तले
नक्षत्रे क्षयमागतेऽन्तिकचरे कल्पान्तकालेऽपि यः ।
निर्भीकं विचरिष्णुरद्य तनयास्नेहाङ्कुशेनाहतं
तं त्वां भारतभाग्यभञ्जनकरं कः श्रद्दधीत स्फुटम् ॥ ३२ ॥

संवर्ताग्निकरालकालविगलज्ज्वालावलीभिर्नं यो
दग्धोऽभूत्तमहो क्षणं तृणमिव क्षुद्रं विधायाधुना।
वात्सल्यं, सकलं तदीयमितरत् पृष्ठे दधानं घनं
कालुष्याङ्कुरमुद्वमत्यविकलं स्वातन्त्र्यपोषापहम् ॥ ३३ ॥

यावत् प्राक्तनकण्टको न निरगाद् हृद्दारणे दारुण-
स्तावन्नूतन आगतः पविसमः कोऽयं महाकण्टकः।
नूनं भारत वासिनां सुभगतास्वाहाकृते सर्पिषां
धारासारनिभोयमस्ति विपदामाऽम्बरोद्भावकः ॥ ३४ ॥

हिन्दूष्वद्यमहीरुहेषु सुतरां भावीप्रहारोऽशने-
राशाया व्रततीतती रुजमिता तेषामिदानीन्तनी।
विष्वक् सन्तमसं स्वदेशजनताग्रासाय पञ्चाननः
सर्वं शूलमिदं तवैव विकृतेर्दुष्पाक आलक्ष्यते ॥ ३५ ॥

येयं मानवता विनिर्मलगुणैः संदृश्यते गुम्फिता
सर्वेषां हितकारिणी लयपथं सेयं समालम्बते।
सर्वस्वापहरे परा भयभरा स्वाधीनताघस्मरा
हा हा दानवताद्य सम्मुखमुखेवालक्ष्यते सोद्यमा ॥ ३६ ॥

याहीतो बहुदूरमात्मजजनक्लेशासहिष्णुत्वत-
स्त्वद्रक्षाकरणे विकम्पितबलस्त्वास्ते प्रतापोऽक्षमः।
रे क्षत्रत्व ? चिरात्तवात्र महिमा जेगीयमानोऽधुना-
ऽक्षीणापत्तिपदाधिरोहणपरः किं नैव दृष्टिं गतः ॥ ३७ ॥

यस्योत्साहतरोः सुशीतलतलं तापापहं संश्रिता
विश्रान्तिं समवाप्य सम्यगनिशं स्वाधीनतां राष्ट्रियाम्।
कर्तुं लग्नमनाः स्वदेशजनता स्नेहेन तुच्छेन त-
च्चित्तं दुर्बलताहतं कथमिहालोक्याशरण्योच्छ्वसेत् ॥ ३८ ॥

एकस्या अनतिस्थिरार्तिविवशस्वान्तात्मजाया दशां
दृष्ट्वा दूनतरां विदीर्णहृदयोऽधीरात्यघोरोभवान्।
देशस्यास्य कथं प्रजाजनमनो व्याक्षिप्ततां स्थायिनीं
दूरीकर्तुमना भवेद् दृढमतिः सम्भाविनीं भैरवीम् ॥ ३९ ॥

क्षुत्क्षामोऽपि न वीरतां क्वचिदपि क्षामांविधातुं क्षमो
वीरः स्यादिदमेव भारतभुवो वीर व्रतं सम्मतम्।
वित्त धाम बलं प्रियं प्रियतमा प्राणा अपीहाखिलं
सौख्यं सर्वविधं स्वदेश जनताक्षेमार्थमुत्सृज्यते ॥ ४० ॥

लब्धुं जन्म च यत्र वाञ्छति सदा वृन्दारकाणां कुलं
यत्रैवोद्भवमेत्य मुक्तिफलभाक् सञ्जायते ज्ञानवान्।
रत्नानां खनिरस्ति यत्र विपुला धर्मस्थली श्रीभरा
लभ्या वीरवरेण सा वसुमती धैर्यादिभिः सद्गुणैः ॥ ४१ ॥

जानन् शौर्यमनुत्तमंगुणगणं धैर्यञ्च शत्रोः कुलं
मंक्षूत्सादयितुं परोऽनुगगणः सोत्साह आसीच्च यः।
सोऽयं तेऽद्यतनीं विचार सरणिं प्रातीप्यमालम्विनीं
ज्ञात्वाश्चर्यभरोन्मना विरहितालम्बश्चसीदेद्ध्रुवम् ॥ ४२ ॥

देशस्यास्य भुवं कलङ्करहितां स्वीयामकस्माददितेः
कातर्याद्यनभीप्सीतावमगुणैरन्यां विधातुं परे।
पारम्पर्यविलोपनैकर्मतिके कुत्साप्रिये स्वामिनि
कं वेहत्यकुलाङ्गनाकुलमहोभावञ्च कुर्यात् त्वयि ॥ ४३ ॥

आशीर्भिर्नयपण्डितं हृदयतस्त्वामन्तरा कं नृपं
स्वीयं राष्ट्रभवन्तमापदि धरादेवश्च सम्भावयेत्।
कम्वा धैर्यधनं विलोक्य जनताक्षेमैककांक्षास्पदं
क्षत्राः प्रोत्सहमान चेतस इहोन्माथक्षणेस्युस्तराम् ॥ ४४ ॥

वाणिज्यं सुखपूर्वकं विदधतां यस्य प्रभावाद् विशां
दौर्भाग्याद् विमुखे स्वदेशहिततस्तस्मिँस्त्वयिक्षोणिपे।
कः श्रद्धासुमनः परागपटलैरापिञ्जरैः पिञ्जरो-
भूतः स्यादिति कुण्ठितेन मनसा निर्णेतुमेवाक्षमा ॥ ४५ ॥

ये वा सन्ति जघन्यजा निजगुणैः सेवाव्रतैः कर्मभिः
सर्वानत्र जनान् प्रहर्षपुलकान् कर्तुं सदा सोद्यमाः।
ते दृष्ट्वा प्रतिकूलतामुपगतं हर्षप्रकर्षच्छिदं
त्वामद्याशरणाविषण्णमनसः प्राप्स्यन्ति कां वा दशाम् ॥ ४६ ॥

आश्रित्याण्डजवृन्दमुन्नततरुं निर्माय नीडं सुखं
शेते स्मात्र हठात्तदीयविकृतिज्वालावलीढश्च चेत् ।
स्यादेतच्छरणाद्वियुक्तमहहापत्तौ निमग्नं कथं
जीवेदत्र विचारणैव नहि मे कापि स्फुरत्यात्मनि ॥ ४७ ॥

पान्था यस्य सुदुर्लभां बहुविधैश्छायां श्रमैः शाखिनः
सम्प्राप्यातपतप्तकायकलुषाः श्रान्ताभवन्तश्च चेत् ।
तच्छाखाः सहसा पतेयुरखिला मोहं गतास्ते कथं
प्राणान् धारयितुं भवन्तु सफला हे नाथ नो ज्ञायते ॥ ४८ ॥

कर्माकर्मविकर्मजालगहने संशीतिरूपेऽध्वनि
प्रास्तीर्णे पततां विदां शरणमस्त्येकैव मान्या श्रुतिः ।
सा त्वत्कुत्सितसन्धिनैव सुतरां शोच्यां दशां गामिनी
सर्वानार्यजनान् स्वकर्मवलितान् कुर्यात् कथं हेलिता ॥ ४९ ॥

यद्राज्ये क्वचनास्ति पण्डितसदस्याम्नाय चर्चाऽमला
क्वाप्यास्ते महतोद्यमेन विदुषां वैदुष्यवार्ता वरा ।
धर्मस्यास्ति विचारणा बहुविधा कल्याणिनी वा क्वचित्
तद्राज्ये यवनाप्लुते किमिह हा ? तासां स्थितिः सुस्थिरा ॥ ५० ॥

यस्मान्मानमवाप्य सत्कविगणो गोष्ठीषु काव्यामृता–
स्वादस्फीतिचणान् सचेतस इवान्यान् सम्विधत्तेऽश्रमम् ।
तस्मिन् दुर्भगतावशात् त्वयिगते पन्थानमापद्भरं
स्वामिन् तस्य च किं भविष्यतितरां सम्मान ईदृक् पुनः ॥ ५१ ॥

यत्रानारतमुत्सुकायितहृदोऽनल्पं त्रयीसम्मतं
नाना कर्म पवित्रभारतधराखण्डे स्थिता याज्ञिकाः ।
कुर्वन्तोऽत्र जनान् पुनन्ति वितते र्होमस्य गन्धोत्करै-
स्तस्मिन् किं परतन्त्रतानिगडिते यज्ञोत्सवो द्रक्ष्यते ॥ ५२ ॥

आर्याणामधिसद्म यत्र विधिना नित्यं शिवाराधना
भक्त्या चतुर्भुजस्तुतिरहो दैनन्दिनी श्रूयते ।
राष्ट्रे तत्र निजे परैरधिगते त्वद्दुर्बलाचारतः
किं जानातिभवानिहार्यजनताक्लेशः कियान् दुःसहः ॥ ५३ ॥

[ क्रमशः ]

# गृह्यसूत्रकालिका-आश्रम-व्यवस्था

## आश्रमः

गृह्यसूत्रकाले मानवजीवनं चतुर्भिर्विभागैर्विभक्तमासीत् । तेषां विभागानामाश्रमइति ख्यातिरासीत् । ते च ब्रह्मचर्यगृहस्थ-वानप्रस्थ-सन्यासाश्रमा इति आसन् । तेषु आश्रमेषु ब्रह्मचर्याश्रस्य गृहस्थाश्रमस्य च विशेषत उल्लेखं कृत्वा तत्तदाश्रमिणां कर्त्तव्यपालनविषयकस्याधिकार-विषयकस्य च विवरण प्रायः सर्वेषु गृह्यसूत्रेषु कृतमस्ति । एतौ द्वावेवाश्रमौ प्रधानभूतौ आस्ताम् । यतो हि यावन्ति गृह्यसूत्राणि सन्ति तेषु सर्वेषु अर्धाधिकगृह्यसूत्राणां ब्रह्मचर्याश्रम[1]विषयेण बहूनां गृहस्थाश्रमसं[2]स्कारेण चारम्भो भवति । केषुचिदेव गृह्यसूत्रेषु चतुर्णामाश्रमाणां साकल्येन कार्यकलापानि[3] विवृतानि सन्ति किन्तु तत्रापि विशेषत द्वयोराश्रमयोर्ब्रह्मचर्यगृहस्थाश्रमयोरेव विवेचनमस्ति ।

## ब्रह्मचर्याश्रमः

आश्रमेषु सर्वप्रथमाश्रमसर्वाधिकमहत्त्वपूर्णो ब्रह्मचर्याश्रम आसीत् । ब्रह्मचर्याश्रमे प्रविष्टो बालको ब्रह्मचारीति शब्देनोच्यतेस्म । यद्यपि ब्रह्मचर्याश्रमे प्रवेशार्थं प्रायोब्राह्मणक्षत्रियवैश्यबालकानामेवाधिकार आसीत्तथापि शूद्रवर्णस्य रथकारस्यापि तत्राधिकार प्राप्तःआसीत् । ब्रह्मचर्याश्रमे एव बालकानां सर्वाङ्गीणविकासो मानवजीवनस्य साफल्याय मार्गप्रदर्शनञ्च भवतिस्म । ब्राह्मणबालकस्य गर्भाष्टमवर्षमारभ्य षोडशवर्षं यावत्, क्षत्रियबालकस्येकादशवर्षतो द्वाविंशतिं यावत् । वैश्यस्य च द्वादशमारभ्य चतुर्विंशतिं यावत् ब्रह्मचर्याश्रमे स्थितिर्भवतिस्म[5] । विविधकामनया विविधवर्षेष्वपि ब्रह्मचर्याश्रमे प्रवेशो भवतिस्म । यथा—ब्रह्मवर्चसःकामस्य पञ्चमे सप्तमे वा वर्षे, आयुष्कामस्य अष्टमेवर्षे, तेजस्कामस्य नवमे, अन्नादिकामस्यदशमे, इन्द्रियकामस्येकादशे, पशुकामस्य द्वादशे, मेधाकामस्य त्रयोदशे, पुष्टिकामस्य चतुर्दशे, भ्रातृव्यवन्ताय पञ्चदशे सर्वकामाय षोडशेवर्षे त्रैवर्णिकानां बालकानां प्रवेशनियम आसीत् ।

---

१. आग्निवेश्य गृह्यसूत्रम् ।

२. पारस्करगृह्य सूत्रम् । बौ० गृ० सू० । अथातः विवाहं व्याख्यास्यामः ।

३. आग्निवेश्यगृह्यसूत्रम् ।

४. "वर्षासुरथकारम्" बौ० गृ० सू० २।५।६ ।

५. गो० गृ० सू० ६।१०।४, बौ० गृ० सू० ६।१०।६ ।

६. आग्नि० गृ० सू० जै० गृ० सू०

प्रवेशानन्तरं प्रायो द्वादश, चतुर्विंशतिः षट्त्रिंशत्, अष्टाचत्वरिंशद्वा वर्षाणि ब्रह्मचारिणां निवासस्तत्र भवतिस्म[1]।

## ब्रह्मचारिणः प्रकाराः

गायत्रो ब्राह्मः प्राजापत्यो नैष्ठिक इति चतुर्विधाः ब्रह्मचारिणो भवन्तिस्म।

गायत्रः—उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीत्य सावित्रव्रत-समाप्ते ब्रह्मचारी गायत्रनाम्नाख्यायतेस्म।

ब्राह्मः—सावित्रव्रतादूर्ध्वमनभिशस्तापतितानां गृहस्थानां गृहेषु भैक्षाचरणं वेदव्रतचरणञ्च कृत्वा द्वादशसमाः विंशतिसमाः वा गुरुकुले स्थित्वा वेदान् वेदौ वेदं वा सूत्रसहितमधीत्य गृहस्थाश्रमे प्रविशतो ब्रह्मचारी ब्राह्मनाम्ना प्रख्यायतेस्म।

प्राजापत्यः—यो हि ब्रह्मचारी स्नात्वा नित्यकर्मब्रह्मचर्यशीलो नारायणपरायणो वेदवेदाङ्गार्थान्विचार्य दारसङ्ग्रहं करोतिस्म स प्रजापत्याख्यशब्देनोच्यतेस्म।

नैष्ठिकः—काषायं धौतवस्त्राजिनं वल्कलं वा परिधाय जटिलः, शिखी वा मेखलावान् दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यावदात्मनो विप्रयोग-स्तावद्गुरुकुले स्थित्वा निवेदितभैक्षभोजी भवतिस्म[2]।

आश्रमस्यास्य परिपालनं सर्वेषा त्रैवर्णिकानां कृते आवश्यकमासीदपालने तु कठोर-दण्डविधानमप्यासीत्। स च दण्डो यो हि ब्रह्मचर्याश्रमे न प्रविशतिस्म त्रैवर्णिकस्तस्या-ध्ययनाध्यापनं विवाहो यजनञ्च तत्कालीनसमाजे न स्वीक्रियते[3]स्म समाजप्रदत्तान्यमपि सौविध्यञ्च न दीयतेस्म तस्मै तथा समाजात् तस्य वहिष्कारोऽपि भवतिस्म। अतोऽ-नुमीयते यत्तदाऽश्रमनियमस्यास्य परिपालनमनिवार्यमासीत्। आश्रमेऽस्मिन् स्थितानां ब्रह्मचारिणां षट्संस्काराः सम्भवन्तिस्म तेषु-उपनयनसंस्कारः प्रवेशसमये भवतिस्म मध्यकाले तु चत्वारिवेदव्रतानि गोदान[4]व्रतञ्च भवतिस्म। समापनकाले समावर्त्तना[5]ख्य-संस्कारः सम्पद्यतेस्म। संस्कारेऽस्मिन् आश्रमस्यास्य समापनमुद्घोष्य गृहस्थाश्रम-प्रवेशायाज्ञां दत्त्वा गृहस्थाश्रमे निपुणतया जीवनयापनार्थं गुरुणा बहव उदात्त-भावना-पूर्णा उपदेशाः प्रदीयन्तेस्म तेषांमनुशरणेन सफलनागरिको गृहस्थश्च भूत्वा मानव-जीवनस्य साफल्यं प्राप्यतेएव।

---

१. पा० गृ० सू० २।६।२-३।
२. वैखानस गृ० सू० ८।३ पृ० ११२
३. अत ऊर्ध्वंपतितसावित्रीकाः भवन्ति, नैनमुपयेयुर्नाध्यापयेयुर्न याजयेयुर्नचैभिर्व्यवहरेयुः। पारस्कर गृह्यसूत्रे २।५।४१
४. पा० गृ० सू० पृ० ४०१
५. पा० गृ० सू० पृ० ४०३

## गृहस्थाश्रमः

ब्रह्मचर्यानन्तरं द्वितीयाश्रम अतिमहत्त्वपूर्णश्च गृहस्थाश्रम एवासीत्। ब्रह्मचर्यसमापनकाले "प्रजातन्तुमाव्यवच्छेत्सीः" इति गुरुशासनात् सर्वेषां त्रैवर्णिकानां कृते आश्रमेऽस्मिन् प्रवेशः तन्नियमपरिपालश्चावश्यकमासीत्[१]। आश्रमस्यास्यात्यधिकं महत्त्वमासीत्। यतो हि अनेनैव मानवजीवनस्य महत्त्वपूर्णानि उद्देश्यानि परिपूर्यन्तेस्म। सर्वेषामाश्रमाणामपि अयमेवाश्रयभूताश्रम आसीत्। गृह्यसूत्रेषु अस्यैवाश्रमस्य संस्काराःयज्ञादयश्च विशेषतो विवृताः सन्ति। गृह्यसूत्राणां गृह्यसूत्रत्वमपीदमेव प्र,दर्शयति।

आश्रमेस्मिन् स्थितोजनो गृहमेधिनाम्नापि आख्यायतेस्म अस्मिन् प्रवेशार्थं विवाहसंस्कारस्यानिवार्यतासीत्[२]। समावर्त्तनानन्तरं गुरुणा मातापितृभ्यां वाज्ञापितो गृहस्थाश्रमधर्मस्य सम्पादनाय समावृतो स्नातको विवाहं करोतिस्म[३]। गृहस्थाश्रमप्रविष्टो जनो गृहपतिशब्देनालङ्क्रियतेस्म। सर्वेषां गृहपतीनाङ्कृते अहरहः पञ्चमहायज्ञानामनुष्ठानमावश्यकमासीत्। सर्वेषां गृहस्थानां गृहे यज्ञाग्निरजस्रं प्रज्वलितो दृश्यतेस्म। अयमेवाग्निरावसथ्याग्निशब्देनाख्यायतेस्म। गृहस्य एको भाग एतदर्थमेव नियतः क्रियतेस्म यस्य नाम "आवसथ गृहम्" इति प्रख्यातमासीत्[४]। आवसथे अग्न्याधानं भवतिस्म यो हि आवसथ्याधानमितिकथ्यतेस्म[५]। आवसथ्याधानं प्रायो विवाहकाले एव भवतिस्म यदि तदा न सम्पत्स्यतेस्य तदा भ्रातृभिः पितृणां धनविभागकाले अवश्यमेव आधानं भवतिस्म[५]। अतो गृहस्थाश्रमे प्रवेशार्थं गृह्याग्नेस्थापनमत्यावश्यकमासीत्। गृह्याग्निरेवावसथ्याग्निः, शाला[५]ग्निरीति वा नाम्ना चोच्यतेस्म। गृहस्थाश्चतुर्विधाः भवन्तिस्म। ते च वार्तावृत्तिः, शालीनवृत्तिः, यायावरो घोराचारिकश्चेति।

**वार्तावृत्तिः**—कृषिगोरक्षावाणिज्योपजीवी गृहस्थो 'वार्तावृत्ति" नाम्ना प्रख्यात आसीत्[६]।

**शालीनवृत्तिः**—नियमैर्युक्तः पाकयज्ञैरिष्ट्वाग्निमाधाय पक्षे पक्षे दर्शपूर्णमासयाजी चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी, षट्सु षट्सु मासेषु पशून्याजी प्रतिसम्वत्सरं सोमयाजी च गृहस्थः शालीनवृत्तिनामको व्यवह्रियतेस्म[७]।

**ज्यायावरः**—यो हि हविर्यज्ञैः सोमयज्ञैश्च यजते अध्यापयतिस्म ददाति प्रतिगृह्णातिस्म षट्कर्मनिरतो नित्यं षट्सु मासेषु पशुबन्धयाजी प्रतिसम्वत्सरं सोमयाजी च भवतिस्म सः ज्यायावरो गृहस्थः कथ्यतेस्म[८]।

---

१.-२. अग्निः गृ० सू० १।६ पृ० ३५
३. आप० गृ० सू० २।५।१५।१६
४. पा० गृ० सू० १।२।१
६. पारस्कर गृ० सू० १।२।१
७. पा० गृ० सू० १।२।१।२
८. वैखा० गृ० सू० ८।५ पृ० ११४

घोराचारिकः—नियमैर्युक्तो यजतेस्म किन्तु न याजयतिस्म, अधीतेस्म नाध्यापयतिस्म, ददातिस्म परन्तु न प्रतिगृह्णातिस्म उञ्छवृत्तिमुपजीवतिस्म नारायणपरायणः सायं प्रातरग्निहोत्रं हुत्वा मार्गशीर्षज्येष्ठमासयोरसिधाराव्रतं वनौषधिभिरग्निपरिचरणं करोतिस्म सोगृहस्थः "घोराचारिकः" इति शब्देन प्रख्यातः आसीत्[1]।

सर्वेषा त्रैवर्णिकगृहस्थाश्रमिणां कृते सायंप्रातरग्निहोत्रकरणमावश्यकमासीत्। अहरहरग्निहोत्रं कृत्वा गृह्याग्नौ होमो विधीयतेस्म[2]। प्रातः सायं काले परिचरणार्थं जलाहरणं कृत्वा तैनैव जलेन सायंप्रातः सन्ध्योपासनं कर्म हवनादिकानि कर्माणि च सम्पद्यन्तेस्म[3]। प्रातः सूर्योदये सती सायं च सूर्यास्तसमये एव अग्नौ हवनं क्रियतेस्म[4]। यज्ञोपवीतधारणं सर्वेषामुपनीतत्रैवर्णिकानां कृते आवश्यकमासीत्। यज्ञोपवीतं वामांसतो दक्षिणकक्षं यावद् धार्यतेस्म[5]। हवनसम्पादनकाले शारीरिकिशुद्धिः आवश्यकी आसीत्। गच्छन्, हसन्, इतस्ततश्च विलोकयन्, उच्छिष्टोदकेन, अंगेषु कम्पने, सशब्दं, बाह्यांशः, एकवासाः, उष्णजलेन, सोपानत्कः, कासासिको, गलावलम्बितवासाः, चरणौ प्रसार्य चाचमनं न क्रियतेस्म[6]। गृह्यसूत्रकाले परिवारः सामान्यतया संयुक्त एवासीत्। परिवारस्य वृद्धपुरुषाणां पितृणाञ्च जीवनकाले पुत्रपौत्रादिकास्तेषामधीना एवास्वन्तन्त्ररूपेण निवसन्तिस्म। गृह्यस्वामी गृहपतिशब्देन कथ्यतेस्म[7]। स च सर्वेषु पारिवारिकजनेषु भुक्तेषु सत्सुएव स्वयं भुङ्क्तेस्म। एकगोत्रस्य सर्वेजनाः यत्र तत्र वसन्तोऽपि एक परिवारिकजना एव मन्यन्तेस्म। गृहस्थानां षड्र्घ्याः (आचार्यः, ऋत्विक्, प्रियस्नातको वैवाह्याश्च) भवन्तिस्म। तेषु आचार्यो राजा प्रियश्च यदा यदा गृहे आगच्छन्तिस्म तदा एव तेषां पूजनं क्रियतेस्म[8]। भिक्षून्ब्रह्मचारिणोऽतिथीन्वेदविदः श्रोत्रियान्पितृव्यानाचार्यर्त्विङ्मातुलश्वसुरादीनभ्यागत बालवृद्धातुराध्वश्रान्तञ्च यथार्थं पूजयित्वा अन्यानि कार्याणि करोतिस्म। विवाहाद्युत्सवेषु सर्वैः सवर्णैः सह भोजनं भवतिस्म[10]।

एवं प्रकारेण गृह्यसूत्रकालिकगृहस्थाश्रमः सर्वेषामाश्रभाणामाश्रयभूतत्वादधिकं महत्त्वपूर्णस्थानंप्राप्तमासीत्।

## वानप्रस्थाश्रमः

गृह्यसूत्रकालिको गृहस्थः पुत्रमुत्पाद्य तं संस्कृत्य वेदमध्याप्य वृत्तिं विधाय गुणवतिपुत्रे कुटुम्वभारं नियोज्य तृतीयायुर्भागे उत्तरायणे पूर्णपक्षे पुण्ये नक्षत्रे कुशचीर-

---

१. वैखानस गृ० सू० ८।५ पृ० ११४
२. वैखा० गृ० सू० ८।३ पृ० ११४
३. गो० गृ० सू० १।२१
४. पा० गृ० सू० २।९
५. गो० गृ० सू० १।२।३
६. गो० गृ० सू० १।१।११-२७
७. पा० गृ० सू० २।४।१४
८. पा० गृ० सू० १।३।२
९. पा० गृ० सू० १।३।२
१०. वैखा० गृ० सू० ८।४ पृ० ११४

चर्मवल्कलवासाः जटी, कृष्णजिनोत्तरीयः कृतप्रस्थानालिङ्गोऽग्निमात्मसमारोपणं कृत्वा-सपत्नीको वाप्यपत्नीको वा वनमाश्रयतेस्म[१]। श्रमणमग्निमाधाय वेणुश्यामकनीवारादिभिराण्यमूलफलैरोषधीभिः सायं प्रातरग्निपरिचर्या क्रियते स्म।

वानप्रस्थाश्रमिणः फालादनाकृष्टान्न्येव खाद्यन्तेस्म केचित्तु केवलं जीर्णपर्णाहाराः दन्तोलूलसिकाः शैलकूटा एव भवन्तिस्म[३]। आश्रमेस्मिन् यम–नियम–मन्त्रोपवासानां परिपालनं विशेषतः कृत्वा स्थण्डिलशायी, ऊर्ध्वरेताः, अतिथिप्रियः, अमत्सरी, विवाद-पैशुन्य–मृषावादवर्जी, सदाशुचिः, ग्रामस्य छर्दिमपश्यन्, अरण्यवासप्रियोऽभयदायी सर्वभूतानां परैरभिमृष्टान्याश्रमान्तरहितानि नाभ्यवहरन्, एकाग्निपरायणः, अप्रमादी भवेदिति आसीत् नियमः। वानप्रस्थाश्रमवासिनो जनाः सबीजां प्रोषितां वा भूमिं नाक्रमन्तेस्म। तपोधिकाय यज्ञाधिकाय व्रतोधिकाय च आगतेऽपति फलोदकं दीयतेस्म अनेन प्रकारेण शरीरं परियोषयन्तो मृगैः सह चरित्वा स्वकालं व्यपोह्य स्वर्गलोकं गमिष्यतीति आसीत् दृढो विश्वास, प्रायस्तृतीयायुर्भागे एव आश्रमेस्मिन् प्रवेशो भवतिस्म। आश्रमस्यास्य परिपालनं कृत्वा चतुर्थायुर्भागे परिव्रजतेस्म[४]।

वानप्रस्थाश्रमिणां प्रकारचतुष्टयेननियमनमासीत्। औदुम्वरो वैरिञ्चो वालखिल्य फेनपश्चेति।

औदुम्ब[६]रः—औदुम्वरोऽकृष्टफलान्नौषधिभोजी, मूलफलाशी वा लवणहिङ्गुल-शुनमधुमत्स्यमांसपूत्यन्नधान्याम्लपरस्पर्शनपरपाकवर्जी, देवर्षिपितृमनुष्यपूजी, वनचरो ग्रामवहिष्कृतः सायं प्रातरग्निहोत्रं हुत्वा श्रामणकाग्निवैश्वदेवहोमञ्च कुर्वंस्तपस्समाचरतिस्मौदुम्वरो वानप्रस्थाश्रमो जनः।

वैरि[७]ञ्चः—ये हि प्रातर्यां दिशं प्रेक्षतेस्म तां दिशं गत्वा तत्र प्रियङ्गुयव श्यामाकनिवारादिभिर्लब्धः स्वकीयाननतिविज्य पोषयित्वाग्निहोत्रश्रामणकवैश्वदेव होमी, नारायणपरायणस्तपः शीली भवतिस्म सो वैरिञ्चनाम्नाख्यायतेस्म।

वालखिल्यः[८]—वालखिल्यो जटाधरश्चीरवल्कलोऽकाग्निः कार्तिक्यां पौर्णमास्यां पुष्कलं भुक्तमुत्सृज्यान्यथाशेषान्मासानुपजीव्यस्तपः करोतिस्म। अस्य सूर्य एवाग्निर्भवतिस्म।

फेनपः—उद्दण्डकोन्मतो निरोधकश्शीर्णपतितपत्राहारी चन्द्रायणव्रतश्चरन्पृथिवीशायी नारायणं ध्यायन्मोक्षमेव प्रार्थयतेस्म यो वानप्रस्थाश्रमवासी सः फेनपइति नाम्नाख्यातेस्म[९]।

---

१.-५. आग्निवेश्य गृह्यसूत्रे २।७।१० पृ० ११८।११९

६.-८.-९. वैखा० गृ० सू० ८।८ पृ० ११७

ये चापत्नीका वानप्रस्थाश्रमिणो भवन्तिस्म ते बहुविधाः भवन्तिस्म फलाशिका, उद्दण्डसम्वृता, अश्मकुट्टा, उदग्रफलिनो, दन्तोलूखलिका, उच्छवृत्तिका, संदशनवृत्तिकाः, कपोतवृत्तिकाः मृगचारिकाः हस्तादायिनः, शैलफलकादिनोर्कदग्धाशिनो वैल्वाशिनः, कुसुमाशिनः, पाण्डुपत्राशिन, कालान्तरभोजिनः, एककालिकाश्चतुष्कालिकाः, कण्टकशायिनो, वीरासनशायिन, पञ्चाग्निमध्यशायिनो, धूमाशिनः, पाषाणशायिनोऽभ्यवगाहिनः उदकुम्भवासिनो, मौनिनश्चावाक्शिरसः, सूर्यप्रतिमुखाः उर्ध्ववाहुकाः एकपादस्थिताश्चेति विविधाचारा भवन्तिस्म[1]।

## सन्यासाश्रमः

वानप्रस्थाश्रमनियमेपरिपालिते सति स्वकीयचतुर्थायुर्विभागे सन्यासाश्रमे प्रवेशस्य नियमं गृह्यसूत्रकालिकसमाजे परिपालयतिस्म जनाः। प्रवेशकाले प्रवेशनियमाः विशेषतः परिपाल्यन्तेस्म। प्रवेशकाले अग्निमारोप्य वनाद् ग्रामं प्रविश्य केशश्मश्रूणि वापयित्वा नदीषु शुद्धे जलाशये वा स्नात्वा आचम्य नदीतीरे देवगृहे वा ब्राह्मणानभिगम्याक्रोधनोद्वेषणो वेदं विहाय सर्वाणि कर्माणि सन्यस्यन्तेस्म[2]। तदा वेदस्य सदाध्ययननियम आसीत्। ये वेदं सन्यस्यन्तेस्म ते शूद्रवत् भवन्तिस्म। ब्राह्मणसमीपं "सन्यस्तं मया" इति मन्त्रमुक्त्वापः पिबतिस्म। सन्यासग्रहणकाले केचित् गृहस्थाश्रमिणस्तस्मै काषायवस्त्रं प्लक्षपवित्रपादुके, आसनं, वैणवदण्डं, शिक्यकमण्डलुम् अलाबुपात्रं, कुशबन्धम् इत्यादिसम्भारान् ददतिस्म। स च तान् सम्भारान् परिगृह्य सवितृमण्डलमुद्वीक्षमाणः "सन्यस्तं मया" इति त्रिरुच्चैः प्रवदतिस्म तदनन्तरं ब्राह्मणं विनीतं बहुयाजिनमभिगम्य "दण्डानदातवा" इत्युक्त्वा दण्डान् परिगृह्य कृतनामानिकृतोऽनुज्ञातो यतेर्धर्मान् सम्यक् परिचरेदिति नियमः[3] आसीत्। सर्वाणि कर्माणि सुखसाधनानि सांसारिकवस्तूनि च त्यक्त्वा परिव्रजनादेव परिव्राजकशब्दोऽपि सन्यासिनः पर्यायवाचकः शब्दः प्रख्या[4]तआसीत्। परिव्राजको नित्यऽशिखी नित्यंयज्ञोपवीति, नित्यसन्ध्योपासी नित्यं प्रातः स्नायी, नित्यं भैक्षाशी, नित्यं यमनियममन्त्रोपवासी, नित्यमीश्वरोपासी नित्यंगोदेवगृहवासी। अपगतभयकाम-क्रोधलोभमोहमदमात्सर्यः भवतिस्म। एतेषां नियमानां सम्यक् परिपालनं कृत्वा अन्ते च स्वर्गलोकं गमिष्यतीति आसीत् दृढो विश्वासः[5]।

---

१. वैखा० गृ० सू० ८।८ पृ० ११७
२.-४. आग्नि० गृ० सू० २।७।११ पृ० ११९।१२०
५. वैखानस गृ० सू० ८।८।११७



# नाटककारेषु विशाखदत्तः

लोकोत्तरवर्णनानिपुणकविकर्म काव्यमिति काव्यस्य सामान्यं लक्षणं भवति। तत् काव्यन्तु दृश्यश्रव्यभेदेन द्विविधं भवति-यथा चाह-साहित्यदर्पणकारो विश्वनाथः साहित्यदर्पणस्य षष्ठपरिच्छेदे-"दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधामतम्"। श्रव्य-काव्यन्तु प्राधान्येन श्रवणपदवीं प्रायः सहृदयानां हृदयावर्जकत्वेन काव्यं श्रव्यमिति निगद्यते। दृश्यकाव्यन्तु दर्शकानां सहृदयसामाजिकानाञ्च नेत्रानन्दविषयकत्वेन सहृदय हृदयाकर्षकत्वेन च काव्यं दृश्यमिति व्यपदिश्यते। इत्थञ्च दृश्यमेव काव्यं नाटकपदेन संबोध्यते। नाट्यन्तु "अवस्थानुकृतिर्नाट्यम्" इतिदशरूपकोक्तदिशा प्रतिपाद्यते। काव्ये निबन्धः, धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्तानां नायकानामवस्थानुकारः-चतुर्विधाभिनयो नाट्यकौशलेन अभिनेतुर्नटस्य नामकेन तादात्म्यापत्तिरेव नाट्य-मिति। अभिनेतुं योग्यमभिनेयमिति व्युत्पत्त्यनुसारेण नटादिभिरभिनीयमानं नायका-दीनां चरितमेवाभिनयउच्यते। एषोऽभिनयएव नटे रामादिनायकानां स्वरूपारोपात् रूपकमित्यभिधीयते। यथोक्तं साहित्यदर्पणे "तद्रूपारोपात्तु रूपकमिति" यथा मुखादि-करचरणेषु कमलत्वस्यारोपात् रूपकालंकारो भवति। तथैव नायकादीनां स्वरूपारोपात् रूपकमित्युच्यते। अस्याभिनयस्यापि आङ्गिक-वाचिक, आहार्य-सात्त्विकभेदेन चत्वारो-भेदा भवन्ति। यदुक्तं दशरूपके "भवेदभिनयोऽवस्थानुकारः स चतुर्विधः। आङ्गिको वाचिकश्चैव, आहार्यः सात्त्विकस्तथा" नाट्यशास्त्रे-"त्रिविधस्त्वाङ्गिको ज्ञेयः शारीरो-मुखजस्तथा। तथा चेष्टा कृतश्चैव शाखाङ्गोपाङ्गसंयुतः" इत्यनेनाङ्गिकस्याभिनयस्य त्रयोभेदाः भवन्ति। वाचा निष्पन्नोऽभिनयो वाचिकः, वेषरचनादिभि निष्पाद्य आहार्यः, स्तम्भस्वेदानुरूपः सात्त्विकश्चोच्यते। एवमभिनयस्य भेदाः प्रदर्शिताः भवन्ति। रसा-श्रयेण रूपकापरपर्यायेण च नाट्यस्य प्राधान्यतया दशभेदाः भवन्ति। यथा दशरूपके आह--

नाटकमथप्रकरणं भाणः प्रहसनं डिमः।<br>
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥

दशानामप्येषामवस्थानुकारात्मकत्वेन अभेदेऽपि "वस्तु, नेता, रसस्तेषां भेद हेतवो भवन्ति। यदुक्तं जनञ्जयेन "वस्तु नेता रसस्तेषां भेदक" इति। साहित्यदर्पणे-नाटकलक्षणं प्रतिपादयता विश्वनाथेनाप्यवादि :—

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धि समन्वितम्।<br>
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः॥

सुखदुःख समुद्भूति र्नानारसनिरन्तरम्।<br>
पञ्चादिका दशपरास्तत्रांकाः परिकीर्तिताः॥

प्रख्यातवंशो राजर्षिधीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः ॥

एक एव भवेदङ्गी शृंङ्गारो वीर एव वा ।
अङ्गमन्ये रसा सर्वे कार्यो निर्वहणेऽद्भुतः ॥

एवमेव उपरूपकाण्यपि अष्टादशविधानि सन्ति नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकं विनाविशेषं सर्वेषां लक्ष्मनाटकवन्मतम् । प्राधान्येन नाटके शृङ्गारः वीरो वा प्रधान रसोभवति । धीरोदात्तादिषु कश्चिदुच्चकुलोत्पन्नः नेता स च दिव्योऽथवाऽदिव्योऽथवा दिव्यादिव्यश्च भवति ।

इदन्तु विदितमेव यद् कलासु काव्यकलैव श्रेष्ठतमा कलाऽस्ति । तत्रापि काव्यस्य श्रव्यापेक्षया दृश्यकाव्येऽधिकतरम् रमणीयत्वमास्वाद्यते । यतश्च श्रव्यकाव्ये तु रमणीयत्वोपपादकानि तत्त्वानि केवलं श्रवणाभ्यामेव आस्वादितानि भवन्ति । दृश्यकाव्ये तु कष्टकल्पनया विना रमणीयतायाः वास्तविकं स्वरूपमनायासेनास्वादयितुं शक्यते । अत एव साहित्यजगति नाटकस्यैव सर्वातिशायिनी प्रतिष्ठा श्रूयते "काव्येषु नाटकं रम्यमिति" किं बहुना "सद्यः प्रीति करो रागः" इत्युक्त्वा दृश्यएवास्वादयितुं पूर्णरूपेण शक्यते । नाट्यशास्त्रआविष्कर्ता भरतमुनिनाऽपि नाट्यशास्त्रे प्रत्यपादि-तथाहि—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न वा योगो नाटके यन्न दृश्यते ॥

अतः संस्कृतनाटकानि-अन्यासां भाषाणां नाटकानामपेक्षया सरसवचनरचनया काम्यकलाकौशलशैल्या प्रायशः सुखान्तानि सद्यो रसानुभूतयेऽतिप्रसिद्धानि सन्तीति सर्वैरपि सोल्लासं स्वीक्रियन्ते । संस्कृतनाटकानि तु नान्दी पताका, प्रकरी, पञ्च सन्ध्यर्थप्रकृत्यादिभिः निबद्धानि जीवनस्य सुखैश्वर्यव्यावहारिकराजनीतिशिक्षाणामुपदेशः सामाजिकैरनुभूयते ।

तत्र विशाखदत्तस्य "मुद्राराक्षसम्" संस्कृतनाटकेषु स्वविलक्षणतयाऽद्वितीयं स्थानं भजते । संस्कृतवाङ्मये केषाञ्चित् नाटकानां कथानकं प्रणयमवलम्बते केषाञ्चिच्च युद्धमाश्रीयते । परमिदं नाटकं सर्वत इतिहासविषयमनुसरन्नपि प्रमुखतया राजनीत्या सम्बद्धम् । अनया दृष्ट्या इदं नाटकमप्रतिमम् ।

विशाखदत्तस्य रचनाकाले विवदमानाः विद्वांसः सामान्यतः ख्रिष्टाब्दषष्ठक शताब्द्या उत्तरार्धमस्ति इति मन्यन्ते । तथापि नास्त्यत्र मतैक्यम् । दक्षिणदेशोद्भवः वटेश्वरदत्तपौत्रः महाराजा पृथुपदभाक् पुत्रः विशाखदत्तः कतमं कुलं कां वा वसुमतीमलञ्चकार स्वजन्मना-इति न निरणायि विदुषाऽऽद्यावधिनाटककारः कस्मिंश्चिद्

राजकुले जनिलेभे। तस्य पितामहो वटेश्वरदत्तोऽथवा वत्सराजः कस्यचिद् देशस्य सामन्त आसीत् जनको भास्वरदत्तोऽथवा पृथुः महाराजपदवीमलभत्। इत्यत्र किमपि दृढ़तरं प्रमाणं नोपलभ्यते। तथापि स्वग्रन्थस्य प्रस्तावनायां दत्तेन निजपरिचयेन "यथा सूत्रधारः अलमति प्रसङ्गेन आज्ञापितोऽस्मि। परिषदा यथा अद्य सामन्तवटेश्वरदत्त पौत्रस्य महाराजपदभाक् पृथुसूनोः कवे विशाखदत्तस्य कृतिः मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति "अस्य कवेः राजवंशोद्भवत्वं प्रकाश्यते। राजवंशोद्भवस्य राजनीति निपुणत्वं नैसर्गिकम्। नायं नाटककारः राजनीतावेव नैपुण्यं विभर्ति-अपितु दर्शने, ज्योतिषे च शास्त्रे कृतभूरिपरिश्रमः प्रतीयते। नाटकान्तर्गतवस्तुवर्णनशैल्या नाटककारः विशाखदत्तः कौटिल्यार्थशास्त्रस्य शुक्रनीतेः दर्शनशास्त्रस्य च प्रकाण्डः पण्डितः आसीदिति विज्ञायते।

वैदिक धर्मावलम्बी सन्नपि विशाखदत्तः एतादृशः वदान्यः उदारश्च वर्तते यदन्यधर्मान्प्रति तस्य दृष्टिकोणो न सङ्कीर्णः जैनधर्मंप्रति यत्तस्यानास्था प्रतीयते सा युगस्य धार्मिकभावनायाः एकः समुद्गारः विद्यते। कविना विशाखदत्तेन नाटकमिदं न हि रसप्रधानं निरमायि-अपितु घटना प्रधानम्। मुद्राराक्षसे नाटककारः चतुर्थाङ्कान्तर्गतस्य तृतीयपद्यस्य वर्णनाप्रसंगे नाट्यशास्त्रस्य वैदुष्यमथ च पञ्चमाङ्कस्य दशमश्लोक व्याजेन न्यायशास्त्रस्य स्वकीयं पाण्डित्यं प्रदर्शयति। तथाहि—

कार्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्।
बीजानां गर्भितानां फलमतिगहनं गूढ़मुदभेदयंश्च॥
कुर्वन् बद्ध्या विमर्शं प्रसृतमपि पुनः संहरन् कार्यजातम्।
कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद् विधो वा॥ ४।३

अपि च

साध्ये निश्चितमन्वयेन घटितं बिभ्रत्सपक्षे स्थितिं।
व्यावृत्तश्च विपक्षतो भवति यत् तत् साधनं सिद्धये॥
तत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धश्च यत्।
तस्याङ्गीकरणेन वादिन् इव स्यात् स्वामिनो निग्रहः॥ ५।१०

मुद्राराक्षसं राजनीतेः कपटप्रबन्धान् कुमन्त्रिणश्च चारु चित्रयति। अस्य कथानकस्य केन्द्रबिन्दुर्नन्दवंशस्य महामात्यो राक्षसोऽस्ति, यस्य स्वामिभक्त्या प्रवीणतया चाकृष्टश्चाणक्यस्तं चन्द्रगुप्तस्यामात्यपदमुपहारी करोति, परं सनाङ्गीकरोति। इदमुद्देश्यमुररीकृत्य चाणक्यराक्षसयोर्मध्ये यानि विचेष्टितानि घटितानि तानीदं नाटकं रूपयति।

मुद्राराक्षसेऽपि मृच्छकटिकवद् घटनानां वास्तविकं यथातथ्यं च चित्रणमस्ति। घटनानामेकाग्रताऽपि अत्र दर्शनीया। वस्तुतस्तु अस्य नाटकस्य आद्यन्तमोजस्विता मूर्जस्वलतां पौरुष्यं चैकान्ततो भजते। नाटकेऽस्मिन् सफलनाटकापेक्षिताः सर्वेऽपि गुणा; प्राप्यन्ते। कार्यान्वितेरत्रापूर्वो निर्वाहोऽभवत् येन नाटके प्रभावोत्पादकता नितरामुत्पन्ना। चरित्रचित्रणेऽपि नाटककारो विशाखदत्तः अधिकः सतर्को जागरूकश्च प्रतीयते। तस्य पात्रसृष्टिः सजीवा व्यक्तित्वयुक्ता च तुलनात्मक-शैल्या विशेषगुणसम्पन्ना च भवति। चाणक्यराक्षसयोस्तुलनात्मकं चित्रणं साकल्येन साकल्यं सफलयति। यदिचाणक्यः स्थिरचित्तः अनुक्षणं जागरूकः कठोरहृदयः, शाठ्यनीति निपुणः, दुर्दान्तः, तर्हि राक्षसोऽ स्थिर चित्तः विस्मरणशीलः, उदारहृदयः, सज्जनः दमनीयः एवं नाटककारश्च चन्द्रगुप्तमलयकेत्वोः, सिद्धार्थभागुरायणयोः निपुणकविराधगुप्तयोः, जाजलिवहिनर्योस्तुलनात्मकं चित्रणे नितरां भव्यं मोदं जनयति। मुद्राराक्षसे स्त्रीपात्राणाभावौ विद्यते केवलं सप्तमेऽङ्के चन्दनदासस्य भार्या रङ्गमञ्चे संदृश्यते। विषकन्याया अपि केवलमुल्लेखमात्रमेव चकास्ति। शृङ्गाररसा-त्राभावः स्फुटतरमेव। केवलं कतिपयेषु स्थलेषु .राजनीतिकविषयाणां शृङ्गारिक पद्धतिरवश्यमपुलभ्यते।

अन्ये च विद्वांसो मुद्राराक्षसं वीररसप्रधानं नाटकमामनन्ति। वस्तुतस्तुनाटक मिदं घटनाप्रधानमेवेति बोध्यम् अत एवास्य नाटकस्य नायकश्चाणक्य एव। अन्येषां मतेतु अस्य नायकश्चन्द्रगुप्तः। विदूषकाभावेऽपि नाटकस्यास्य रोचकता अक्षुण्णा। नाटकस्य कथानकमेव एतादृशं गहनं जटिलञ्चास्ते यद् दर्शकस्य न जिज्ञासा क्वचिदुप-शाम्यति। न च तस्य कौतुकं क्वचिदवस्यति। ओजस्विता वरणस्यावतारणायां, तथा वीररसस्याभिव्यञ्जनायां तत्त्वतो मुद्राराक्षसं नाटकं संस्कृतवाङ्मयेऽद्वितीयं स्थानं लभते। मुद्राराक्षस्य शैली महती प्रवाहपूर्णा प्रसादगुणगुम्फिता प्रौढ़प्रबला च विद्यते। अदीर्घाणि च अस्य लाक्षणिकानि च वाक्यानि सहृदयहृदयावर्जकानि वेदितव्यानि। समासबहुलादीर्घपदावली-अनतिविस्तृते न प्रयुक्तानि सन्ति। अलंकारप्रेमसीमितं मधुरं मञ्जुलं सरसं रुचिकरं च चकास्ति। स्थाने प्रयुक्ताः अलंकाराः नाटके कामप्य-भिरूपां द्योतयति। शब्दविन्यासः सुशोभनः मनोहारी च दृश्यते यथैकं पद्यमुदाह्रियते—

आस्वादित द्विरद शोणित शोण शोभां।
सन्ध्यारूणामिव कलां शशलाञ्छनस्य॥
जृम्भा विदारित मुखस्य मुखात् स्फुरन्तीं
को हेतुमिच्छति हरेः परिभूय दंष्ट्राम्॥ १।८

एवमेव चाणक्यस्य राजनीतेः वैचित्र्यं दृश्यताम्।

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना।
मुहुः सम्पूर्णाङ्गी मुहुरतिकृशाकार्य वशातः।

मुहुर्भ्रंश्यद् बीजा, मुहुरपि बहुप्रापितफले
त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ५।३

इत्थमेव चाणक्यस्य कुटीर वर्णनमपि लोकोत्तरमस्ति ।

उपशकलमेतद् भेदकं गोमयानां ।
वटुभिरूपहृतानां बर्हिषां स्तोम एषः ।
शरणमपि समिद्भिः शुष्यमाणाभिराभि ।
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥

किं बहुना आसत्यामपि श्रृङ्गारकथायामसत्यपि च प्रणयव्यापारकलापे नाटकमिदमलौकिकेन सरसत्वेनामूलचूलं चाप्यायितं विद्यते। ओजगुणा विस्तारः तथात्र समृद्धो यथा सामाजिकानां मनो विनोदाय वस्त्वन्तरं नापेक्षितं भवति। स्त्रीपात्रस्य विदूषकस्य चाभावे यदिदं नाटकं सरसं सरलं च सञ्जातं तदस्य ग्रन्थकर्त्तुः काव्यकला प्रवीणतायाः प्रबलं प्रमाणं विद्यते। अत्र नाटके पाठकानां जिज्ञासा कदापि मध्ये न विश्रान्तिमासादयति। कुतूहलवर्धकमाख्यानं नाट्यस्य जीवितं तदत्र पर्याप्तभावेनावस्थितमिति चमत्कारि नाटकमिदं बोधितं भवति। सुघटितकथा वस्तुयोजनायां, व्यक्तित्वपूर्णपात्रचरित्रचित्रणे ओजस्विवातावरणोपन्यासे च नाटकमिदमद्वितीयमिति सर्वं सम्मतम्।

विशाखदत्तस्यान्यदपूर्णं देवीचन्द्रगुप्तनामकं नाटकान्तरमपि विद्यते। यस्य-वृत्तमपि राजनीतिमितिहासं चावलम्बते। भोजस्यसरस्वती कण्ठाभरणे अभिनव गुप्तस्याभिनवभारत्यां चास्योल्लेखो दृश्यते। एतन्नाटकेतिवृत्तमादायैव जयशंकर प्रसादेन हिन्दी भाषायां "ध्रुव स्वामीनि नाम नाटकं" निर्मायि। विशाखादत्तस्य प्रतिभा उन्मुक्ता उदात्ताचास्ति। स खलु संस्कृतसाहित्यस्य मौलिकः कलाकारो वर्तते। तदीय मुद्राराक्षसं विश्वस्मिन्नपि जगति लब्धख्यातिं विश्वसाहित्येऽपूर्वं पदमलंकरोति-इति सुधोभिराकलनीयम्-इति शिवम्।



# गम्[1]धात्वर्थ-विचारः

'अनेकार्था हि धातवः' इति वचनमवलम्ब्य उपसर्गमन्तरेणापि गम् धातोरनेकार्थता समाधीयते।

एष धातुर्गतिसामान्यवाचकः। उत्क्षे[2]पणापक्षेपणाकुञ्चनप्रसारणगमनानि कर्माणि गतिमेवेङ्गन्ति। उत्तरदेशसंयोगानुकूलव्यापारोऽसौ बोद्धव्यः। गतिं हित्वा प्रायः सर्वेष्वेवार्थेषु धातोरेतस्यार्थापकर्षो भवति।

१. ऋग्वेदे—"अग्ने[3]यज्ञमध्वरं विश्वतः परिभूरसि स इद्देवेषु गच्छति"। इत्यत्र गम्धातुर्गत्यर्थः ग[4]त्यर्थेगम् धातुः सुप्रसिद्धः।

२. गमनोद्यममात्रेऽपि गम् धातोः प्रयोगो दृश्यते। रामादीनां चतुर्णां पुत्राणां विवाहानन्तरं दशरथो मिथिलाधिपमापृच्छ्य गन्तुमुद्यतोऽभून्नतु गतवान्, यतो हि तदनन्तरं विदेहेन बहुकन्याधनंदत्तम्। यथा बाल्मीकीयरामायणे—

विश्वामित्रे गते[5]राजा वैदेहं मिथिलाधिपम्।
आपृष्ट्वैव जगामाशु राजा दशरथः पुरीम्॥
अथ राजा विदेहानां ददौ कन्याधनं बहु।
गवां शतसहस्राणि बहूनि मिथिलेश्वरः॥

३. इतरशब्दसन्निधानेन गम्धातोरर्थाः भवन्तिविविधाः। ऋग्वेदे "क[6]ऋतं पूर्व्यं गतं कस्तद्बिभर्ति नूतनोवित्तं मे अस्य रोदसी"। इत्यत्र गम्धातोः सत्तार्थः। हे अग्ने? त्वदीयं पूर्व्यं = पूर्वकालिकम्, ऋतम् = भद्रं स्तोतृभ्यः कृतं श्रेयः; क्वगतम् = कुत्रेदानीं वर्त्तते इत्यर्थः।

४. ऋग्वेदे "उत[7] पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम्"। इत्यत्र गम् धातोः प्रातिरर्थः। जरिमाणम् = जराम्, जगम्याम् = कण्टकराहित्येन प्राप्नुयाम्।

महाभारते—"एतैः[8] सर्वैर्गम्यते बुद्धिनेत्रैः" इत्यत्र गम्यते = अधिगम्यते, इति। उपसर्गाणां द्योतकत्वमिह निकामं सिध्यति। अध्युपसर्गमन्तरापि प्राद्यर्थो गम्यते गम् धातुना।

---

१. गम्लृ गतौ धा० सं० ९८२ भ्वा० प० अ०
२. त० सं० पृ० ५।
३. ऋ० म० १ अ० १ मं० ४।
४. आ० च० २-३-१०४।
५. वा० रा० १ ७४ २-३।
६. ऋ० म० १ अ० १५ मं० ४।
७. ऋ० म० १ अ० १७ मं० २५।
८. म० भा० १२, २७०, ४७।

श्रीमद्भगवद्गीतायाम्—

"नाप्नुवन्ति[1] महात्मानः संसिद्धिं परमां गताः"। इत्यत्र गताः=प्राप्ताः इत्यर्थः।

मनुस्मृतावपि—

यस्य कायगतं[2] ब्रह्म मद्येनाप्लाव्यते सकृत्।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति॥

इत्यत्र गच्छति=सम्यग् आप्नोति। णिजन्ते गम्धातोः प्रयोगेऽपिलभ्यतेऽयमेवार्थः। महाभारते—"गमयिष्यामि[3] शक्रेण समतामपि ते ध्रुवम्" इत्यत्र गमयिष्यामि=प्रापयिष्यामि, इत्यर्थः। गमनेन पूर्वदेशसंयोगात् तत्प्राप्तिः, उत्तरदेश वियोगानुकूलव्यापारात् ततो निवृत्तिर्जायते। अतएव ये ये गत्यर्थास्ते ते प्राप्त्यर्थाः" इति व्याख्याकाराः समामनन्ति।

५. प्राग्[4] वहतेष्ठक्" इति पाणिनीये सूत्रे "गच्छतौ परदा[5]रादिभ्यः" इति कात्यायनीयं वार्तिकं वर्त्तते। तदनुसारेण परदारान् गच्छतीति पारदारिकः, गुरुतल्पं गच्छतीति गौरुतल्पिकः, गुरुतल्पो=गुरुस्त्री इति। अत्र गम् धातुः संभोगार्थकः।

ऋग्वेदेऽपि—"मि[6]नाति श्रियं जरिमा तनूनामप्यू नुपलीवृंषणो जगम्युः"। इत्यत्र जगम्युः=गच्छेयुः संभोगं कुर्य्युः, इत्यर्थः।

६. अव पूर्वको गमधातुर्ज्ञानार्थकः। अवोपसर्गाद् ऋतेऽपि गम् धातुर्ज्ञानार्थे दृश्यते।

महाभारते यथा—

स राजाभूय[7] एवाथ ज्ञात्वा तत्त्वमथागमत्।
कन्येति पाञ्चालसुतां त्वरमाणो विनिर्ययौ॥

एवमेव महाभारते—

तामवस्थां[8] तदाकारां सख्यस्ता जग्मुरिङ्गितैः।
ततो विदर्भपतये दमयन्त्याः सखीगणः॥

---

१. गी० अ० ८ श्लो० १५। २. मनु० ११, ९८।
३. म० भा० १४-७.२७। ४. अष्टा० ४-४-१
५. सि० कौ० बा० सं० २९५४ पृ० सं० ७१ बा० म० टीका द्वि० भा०।
६. ऋ० १-२४-१। ७. म० भा० १२, १०५, २३।
८. म० भा० ३, ५४, ५।

इत्यत्र दमयन्त्याः सख्यस्तस्या नलानुरक्ताभवस्थाम् इङ्गितैर्जग्मुः = अवगतवत्यः इत्यर्थः। कोषेपि गतिः[1] स्त्रीमार्गदशयोर्ज्ञाने यात्राभ्युपाययोः"। गतं वि[2]ज्ञानयातयोः इति च गम् धातुर्ज्ञानार्थकः।

अन्तर्गमनेन कस्यचित वस्तुनो हृदयं ज्ञायत इति गम् धातुर्दृश्यते ज्ञानार्थे। गत्यर्थकस्य[3]इण् धातोरवोपसर्गपूर्वकस्यज्ञानार्थः। किन्त्वेवमेव सर्वेषां गत्यर्थकानां धातूनां ज्ञानार्थो भवितुं न शक्नोति। अञ्च्, अञ्ज्, अट्, अण्ठ्, अय्, अद्, अर्ब्, अव्, अस्, इट्, ऋ, ऋज्, ऋण् इत्यादीनां बहूनां, धातूनां ज्ञानार्थो न दृश्यते, तेन ये ये गत्यर्थास्ते ते ज्ञानार्थाः" इत्युक्तिर्न सङ्गच्छते। गतावपिभेदाः सन्ति। क्वचिद् गमनं साधारणम् क्वचिच्च विशिष्टम्। गम् इण् इत्यादयो धातवः साधारणगत्यर्थाअतोऽत्र ज्ञानार्थ-संभवः अट् सृ इत्यादयो धातवो गतिविशेषार्था इति तत्र न ज्ञानार्थसंभवः।

७. व्युपसर्गपूर्वकस्य व्यत्युपसर्गपूर्वकस्य वा गम्धातोः कालक्षेपोऽर्थः। व्यत्युप-सर्गाभ्यां ऋतेऽपि गम् धातुः कालक्षेपार्थे दृश्यते। कालक्षेपः, कालव्ययः, कालयापनं वा। यथा वाल्मीकीयरामायणे—

"अहोरात्रापदेशेन गताः संवत्सरा दश"[4] इत्यत्र गम् धातुः क्षेपार्थकः। पञ्चतन्त्रेऽपि—

काव्यशास्त्र[5] विनोदेन कालो गच्छति धीमताम्।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा॥

इत्यत्र गच्छति = कालव्ययो भवतीत्यर्थः।

८. प्राणिनां जीवनक्षेपार्थेऽपिप्रयुज्यमानो लभ्यते धातुरेषः। यथा महाभारते—

न भेतव्यं त्वया[6] देवि नहुषाद् दुष्टचेतसः।
न ह्येष स्थास्यति चिरं गत एव नराधमः॥

इत्यत्र 'गतः' इत्यस्य 'मृतः' इत्यर्थः। संप्रत्यपि लोके क्तप्रत्ययविशिष्टोऽयं शब्दो मृत्योरर्थे प्रयुज्यते। हरिवंशपुराणेऽपि—

नावेद[7] विद्वानागच्छेन्नापि रौद्रं व्रतं चरेत्।
न च त्यागेन गच्छेत् गृहधर्मं च न त्यजेत्॥

इत्यत्र न च त्यागेन = परिव्राजेन, गच्छेत = म्रियेत। इति।

---

१. मेदि० ते १४।
२. मेदि० ते० १५।
३. इण् गतौ १०४ अ० प०।
४. बा० रा० १, ६३, ११।
५. प० त० मि० ला० श्लो० १ पृ० ३३।
६. म० भा० ५, १४, २७।
७. ह० वं० पु० ३, १४, १०।

९ गम् धातुः प्रवेशार्थकः। यथा श्रीमद्भगवद्गीतायाम्—

ततः [1]पदं तत्परिमार्गितव्यम्।

यस्मिन् गता न निवर्तन्ति भूयः। इत्यत्र गतिविशेषो नाम प्रवेशोऽर्थः। मधुसूदनव्याख्यायां गताः = प्रविष्टाः इत्यर्थः।

१०. सङ्गार्थकेऽपि गम्धातोः प्रयोगे दृश्यते यथा बाल्मीकीय रामायणे—

मम [2]पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ।
त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः॥

इत्यत्र गम्धातुः सङ्गार्थकः। तौ = रामलक्ष्मणौ, मम = हनूमतः, पृष्ठगतौ = पृष्ठारूढौ नृसिंहौ त्वत्सकाशम्आगमिष्यतः, इति हनूमतः सीतां प्रतिवचनम्।

११. उपालम्भार्थे प्रयुज्यमानो दृश्यते धातुरेषः। महाभारते—

य [3]आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः।
न स कालं न वा देवान् एनसा गन्तुमर्हति॥

इत्यत्र 'आत्मनो दुश्चरिताद् यो नरोऽशुभं प्राप्नुयात् स कालं देवान् वा एनसा गन्तुम् = उपालब्धुं नार्हति' इत्यर्थः। इह गम् धातुरुपालम्भार्थकः। उपा[4]लम्भो नाम हेतोर्दोषवचनम् इति। 'एनस्' इति पदसन्निधात् प्रकरणपर्यालोचनाच्चायमर्थो भवति।

१२. गम्धातोः प्रयोगो स्वीकरणेऽर्थेऽपि दृश्यते। महाभारते—

साधु[5]गम्यमहं मार्गं न जातु त्वत्कृते पुनः।
गच्छेयं तद् गमिष्यामि हित्वा ग्राम्यसुखान्युत॥

इत्यत्र ग्राम्यसुखानि हित्वा तद् 'गमिष्यामि = स्वीकरिष्यामि' इत्यर्थः। अभ्युपपूर्वको गम्धातुः स्वीकृत्यर्थकः, 'अङ्गीकाराभ्यु[6]पगमप्रतिश्रवसमाधयः' इति कोशात्। इह तु उपसर्गमन्तरैव स्वीकृत्यर्थो विज्ञायते।

१३. गम्धातुः करणार्थकः। यथा महाभारते—

'तस्य[7] पर्येषणं गच्छेत् प्रत्यर्थिषु कथञ्चन'। इत्यत्र प्रत्यर्थिषु पर्येषणं

---

१. गी० १५, ४। म० सू० व्या० पृ०।
२. बा० रा० ५, ६८, २४।
३. म० भा० ५ १५९, ९।
४. च० सं० व० ८।
५. म० भा० १२, ९, २।
६. अ० को० १, ५, ५।
७. म० भा० ५, ४३, ५८।

'गच्छेत्=कुर्यात्' इति नीलकण्ठः। अन्येषां प्राप्त्यादीनामर्थानां नेहौचित्यम्। एवं तावत् गम्धातुः करणार्थकः।

१४. स्पृहार्थेऽपि प्रयुज्यमानो दृश्यते धातुरेषः। यथा महाभारते—

मूर्ध्नि[1] त्वां वासयेयं वै संशयो मे न विद्यते।
न चेदिच्छति राजा त्वां **गच्छेत्** सर्वेण चेतसा॥

इत्यत्र 'गच्छेत्=स्पृहयेत् इति। 'राजा त्वां सर्वेण चेतसाऽगच्छेत्' इत्यत्र सर्वेण चेतसा गमनं नाम स्पृहा।

१५. 'गम्धातुः' अवतरणार्थेऽपि प्रयुज्यते। महाभारते—

'दुर्धार्य[2]मेतन्मनसा **गच्छावतर** पद्मिनीम्' इत्यत्र गम्धातुरवतरणार्थकः। वीप्सायामिहोक्तिः–अवतर-अवतर इति। नीलकण्ठेनापि 'गच्छ' इत्यस्य 'अवतर'- इत्यर्थं एव समास्थितः।

१६. गम्धातुः स्मरणार्थकोऽपि। यथा महाभारते—

कीचकं [3]मनसागच्छत् सृक्किणी परिसंलिहन्।
उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः॥

इत्यत्र मनसा गमनं नाम स्मरणम्। प्ररुदतीं कृष्णां दृष्ट्वा सृक्किणीं परिसंलिहतो भीमस्य कीचकस्मरणं प्रसङ्गागतम्।

१७. गम् धातुराश्रयार्थकः। यथा श्रीमद्भगवद्गीतायाम्—

तमेव शरणं [4]**गच्छ** सर्वभावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥

गच्छ=आश्रय, इत्यत्र गम् धातुराश्रयार्थकः। बाल्मीकीयरामायणेऽपि—'नहि[5] त्वस्मिन् कुले जातोगच्छत्यकुशलां गतिम्' इत्यत्र गतिराश्रय इति तिलकटीकायाम्। एवमेव "गति[6]बुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामपि कर्ता सणौ" इत्यस्मिन् पाणिनीयसूत्रे भट्टोजिदीक्षितः 'आसयत्[7] सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः' इत्याह। हरिर्गतिः=हरिराश्रयः इत्यर्थः।

१. म० भा० ४, ९, २२ नी० क० टी०।
२. म० भा० १३, ९३, ८७।
३. म० भा० ४, २१, ५१।
४. गी० १८, ६२।
५. बा० रा० २, ६४, ४५।
६. अष्टा० १, ४, ५२।
७. सि० कौ० कार० प्र० पृ० ७०७।

१८. सामर्थ्येऽपि गमधातुः प्रयुक्तो विद्यते। यथा बाल्मीकीयरामायणे—

'क्व गतिर्मा[1]नुषाणां च धनुषोऽस्य प्रपूरणे' इत्यत्र 'अस्य धनुषः प्रपूरणे मानुषाणां गतिर्नामसामर्थ्यम्। धनुषः प्रपूरणे सामर्थ्यस्यापेक्षणात्।

१९. गम्धातोः प्रयोगः उत्कर्षेऽपि दृश्यते। यथा बाल्मीकीय रामायणे—

"त्वं [2]गतिं प्राप्स्यसे वीर त्रींल्लोकांस्तु जयन्निव" इत्यत्र त्रयाणां लोकानां जयेनोत्कर्षो बुध्यते।

२०. गम् धातु प्रतिपादनार्थकोऽपि। यथा महाभारते—

मा[3] तात! साहसं कार्षीः स्वधर्मं परिपालय।
स्वधर्मस्थः परं धर्मं बुध्यस्व **गमयस्व** च॥

परस्य धर्मस्य बोधनं प्रतिपादनं च कुर्वितितदर्थः। एवं तावद् णिजन्तो गम्धातुः प्रतिपादनार्थकः।

२१. गम्धातुर्व्याप्त्यर्थकोऽपि। यथा रघुवंशे 'ऊर्ध्वं[4] गतं यस्य न चानुबन्धिः यशः परिच्छेत्तुमियत्तयालम्' इत्यत्र कुमारस्याजस्यानुबन्धिनोयशसः सर्वदिग्व्यापित्वं सूचितम्। 'ऊर्ध्वंगतम्' इत्यस्यार्थः-स्वर्गादिकं व्याप्तमिति। यद्यपि प्रविष्टामित्यर्थस्यापि प्रसङ्गः, तथापि ऊर्ध्वे व्याप्ते गगने गम्धातोर्व्याप्तिरूपोऽर्थो यशः पद सन्निधानात्।

२२. प्रवर्त्तनरूपार्थेऽपि गम्धातोः प्रयोगो दृश्यते। यथा—

'इत्थं[5] गते गतघृणः किमयं विधत्ताम्'

इत्यत्र श्रवणकुमारस्य वृद्धजनकद्वारा 'शापे प्रवृत्ते सति' इत्यर्थबोधकम् 'इत्थं गते' इति पदद्वयम्।

२३. साधनेऽपि गम्धातुः प्रयुक्तः। यथा रघुवंशे—

त्वय्या[6]वेशितचित्तानां त्वत्समर्पितकर्मणाम्।
गतिस्त्वं वीतरागाणामभूयः संनिवृत्तये॥

१. बा० रा० १, ६७, १०। २. बा० रा० २, ५२, १८।
३. म० भा० ३, १५०, २५। ४. र० वं० ६, ७७।
५. र० वं० ९, ८१। ६. र० वं० १०, २७।

इत्यत्र सुराः प्रादुर्भूतं रामं स्तुवन्ति। वीतरागाणामभूयः संनिवृत्तये त्वमेव गतिः = साधनम् इति प्रासङ्गिकोऽर्थः।

२४. गम्‌धातोः प्रयोगो जन्यर्थेऽपि दृश्यते। यथा भट्टिकाव्ये—

दृष्टाः[1] स्थाः स्वस्ति वो यामः।
स्वपुण्यविजितां गतिम्॥

इत्यत्र 'स्वपुण्येन विजिताम् = लब्धां, गतिम् = जन्म, याम = व्रजामः' इत्यर्थः।

२५. परिच्छेदार्थेऽपि गम्‌धातुः प्रयुक्तः। यथा—

तालेन[2] संपादितसाम्यशोभं
शुभावधानं स्वरबद्ध रागम्।
पदैर्गतार्थं नृपमन्दिरेषु
प्रातर्जगुर्मङ्गलवत् तरुण्यः॥

इत्यत्र पदैः = सुप्तिङन्तैः, गतार्थम् = परिच्छिन्नार्थम्, निरर्थकपदरहितमित्यर्थः। एवमिह गम्‌धातोः परिच्छेदार्थता बोद्धव्या।

२६ निमज्जनार्थकोऽपि गम्‌धातुः। यथा ऋग्वेदे '[3]अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथि र्जगन्वान्'। इत्यत्र गम्‌धातु निमज्जनार्थः समुद्रपदसन्निधानात्।

२७ गम्‌धातुर्दर्शनार्थकोऽपि। यथा—

'सुग्रीवदोषेण न मां गन्तुमर्हसि किल्विषात्'

इत्यत्र वाली सुग्रीवं क्षमां याचते। नञा सहक्षमार्थः। तदभावे तु दोषेण मां गन्तुम् = द्रष्टुम् = अवगन्तुमर्हसि इत्यर्थः। किल्विषात् मां प्रति दोषदृष्टिर्नोचिता। एवं तावद् दर्शनमर्थो गम्‌धातोरिह बोधनीयः।

एवम्प्रकारेण संक्षेपतः इह गम्‌धातोः सप्तविंशतिरर्था अन्विष्टाः। (१) गतिः, (२) गमनोद्यमः (३) वर्त्तनम्, (४) प्रापणम्, (५) संभोगः, (६) ज्ञानम्, (७) समययापनम्, (८) मरणम्, (९) प्रवेशः (१०) सङ्गः, (११) उपालम्भः, (१२) स्वीकरणम्, (१३) करणम्, (१४) स्पृहा, (१५) अवतरणम्, (१६) स्मरणम्, (१७) आश्रयः, (१८) सामर्थ्यम्, (१९) उत्कर्षः, (२०) प्रतिपादनम्, (२१) व्याप्तिः,

१. भ० का० ४, ६। २. भ० का० ११, १९।
३. ऋ० वे० १, ११७, १५। ४. वा० रा० ४, २२, ३।

(२२) प्रवर्त्तनम्, (२३) साधनम्, (२४) जन्म, (२५) परिच्छेदः, (२६) निमज्जनम्, (२७) दर्शनञ्चेति।

कोशाद् आप्तवाक्याद् व्यवहाराच्च शब्दार्थसिद्धिर्जायते। अर्थस्य व्याकरणेतर प्रमाणत्वेऽपि धातुपाठे धातूनामर्थं सङ्केतो पाणिनिना व्यधायीति महाभाष्याद् भृशं सिध्यति। तथापि "प्रधान प्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्" इति पाणिनीयसूत्रमेव संस्मृत्य केचन धातुपाठगतधातूनामर्थाः न पाणिनिना दर्शिताः, अपितु भीमसेनेन पश्चादर्थं संनिवेशिता इति निश्चिन्वन्ति समालोचकाः।

अतोऽत्र विभिन्नग्रन्थेषु गम्‌धातोः विभिन्नार्थेषु व्यवहारात् गम्‌धात्वर्थाः सङ्कलिता इति।

# ।। धर्ममर्ममीमांसा ।।

## प्रस्तावना

येनायं धार्यते लोकः शोकः संयाति च क्षयम् ।
सोऽयं संसेव्यतां धर्मः प्राप्तुकामैः परं जयम् ।।
वेदादिशास्त्रे लोके च धर्मशब्दः प्रसिद्धयति ।
विधीयतेऽत्र मीमांसा तस्मादस्य यथामति ।।

सुकृतपुण्यादिपदव्यपदेश्यस्तावद्धर्मो वेदादिशास्त्रे लोके च सर्वत्र प्रथितः[1]। येयं खलु सृष्टिर्भगवता नारायणेनाऽपरिपक्वप्राणिकर्मवशात् सत्त्वरजस्तमोरूपाँस्त्रीन् गुणानाश्रित्य प्रवर्तमानमायया यथाकालं समारभ्यते, संरक्ष्यते, संह्रियते च, तस्या आधारो धर्म एवायमिति परमर्षिभिरङ्गीक्रियते। तथा च भगवती श्रुतिराह—

"धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदन्ति, धर्मे सर्वं प्रतिष्ठितं, तस्माद् धर्मं परमं वदन्ति"[2]।

"तच्छ्रेयोरूपमप्यसृजत् तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यतो अबलीयांसमाशंसते, धर्मेण यथा राज्ञैवं यो वै स धर्मः, सत्यं वै तत्तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीत्येतद्धयेवैतदुभयं भवति"[3]।

अभियुक्ततरेण भगवता व्यासेनपि सुस्पष्टीकृतमिदम्—

धारणाद्धर्म इत्याहु धर्मो धारयते प्रजाः।
यस्माद्धारणसंयुक्तः स धर्म इति कथ्यते[4] ।।

## धर्मशब्दस्य व्युत्पत्तिलभ्योऽर्थः

अयञ्चार्थो धर्मशब्दमहिम्नाऽपि सौलभ्येन लभ्यते। शब्दशास्त्रकारा धारणार्थक धृञ् धातोः[5] 'अर्तिस्तुसुहुसृधृक्षिक्षभायावापदियक्षिनीभ्यो मन्' इत्यौणादिकेन[6] सूत्रेण

१. यथोक्तं भर्तृहरिणा— इद पुण्यमिदं पापमित्येतस्मिन् पदद्वये।
आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजमम् ।। (वाक्यपदीयम् १।४०)
अतिप्रसिद्धतया इदं पुण्यमर्थाद्धर्मः, इदञ्च पापमर्थादधर्म इत्येतस्मिन् विषये आपामरं प्रसिद्धे, शास्त्रस्यापि श्रुतिस्मृतिमूलकस्यावश्यकता, सामान्येन नास्तीत्यर्थः।

२. तैत्तरीयारण्यकम् —१०।६३ । ३. बृहदारण्यकोपनिषत्—१।४।१४ ।

४. महाभारतम्—कर्णपर्वः—६९।५८ ।

५. 'धृञ्' धारणे, स्वादिः, उभयपदी, सेट्कः, धा० सं०—९९० । ६. उणादिसूत्रम्—१।१३७ ।

मन् प्रत्यये, गुणे रपरत्वे च शब्दं संसाधयाम्बभूवुः। अनया व्युत्पत्त्यैते त्रयोऽप्यर्था व्यासाद्यभिमताः संसिद्ध्यन्ति—

१. धरति धारयति वा लोकानिति धर्मः।

२. ध्रियन्ते लोका अनेनेति धर्मः।

३. ध्रियते यो लोकैः स धर्म इति।

धारणञ्च पालनाऽनुकूलो व्यापारः। आचारविचारादिना पालितो हि धर्मो लोकान् पालयति, वैपरीत्ये च स एव लोकान् संहरत्यापि। तथा चोक्तमभियुक्तैः—

"धर्म एव हतो हन्ति, धर्मो रक्षति रक्षितः"।

## धर्मशब्दस्य कोशकारैर्निरूपिता अर्थाः

शब्दशास्त्रवच्छक्तिग्राहकेण कोशेनाऽपि उपर्युक्तानेवार्थान् मनसि निधाय श्रुति-स्मृतिप्रभृतिसच्छास्त्रकर्मणो धर्मत्वं प्रतिपाद्य तदर्थे पर्यायवाचिनः शब्दा अभिहिताः, धर्मशब्दस्य च विविधेषु युक्तेष्वर्थेषु शक्तिर्निरूपिता। तथाहि—

"श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः"[१]।

"स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः"[२]।

"धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः[३]।

"धर्मो स्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ।
अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे"[४]॥

"सुकृते पावने धर्मे"[५]।

"श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्।
श्रेयसी करिपिप्पल्यामभयापाठयोरपि"[६]॥

"विधानमृग्यजुः साम्नां त्रयीधर्मं विदुर्बुधाः"[७]।

---

१. अमरकोषः १।६।३
२. अमरकोषः १।४।२४
३. अमरकोषः ३।३।१३९
४. मेदिनीकोषः १०९।१६
५. हैमकोषः २।३७५
६. मेदिनीकोषः १७३।४२-४३
७. मुकुटकोषः

## धर्मलक्षणानि

अथायं धर्मो महर्षिभिर्लोकानां प्रवृत्तये धर्मेतरव्यावृत्तये च लक्षणद्वारा सम्यगत्र बोधितस्तत्र तत्र शास्त्रेषु। तथाहि—

"यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः"[१]।

"चोदना लक्षणो धर्मः"[२]।

"वेदो धर्ममूलम्"[३]।

"वेदप्रणिहितो धर्मः"[४]।

"वेदोऽखिलो धर्ममूलम्"[५]।

"श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम्"[६]॥

"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्"[७]॥

"क्रियासाध्यत्वे सति श्रेयस्करम्"[८]।

"श्रुतिस्मृतिभ्यामुदितं यत् स धर्मः"[९]।

## धर्मलक्षणविचारः

एतेषामुपर्युक्तलक्षणानां मीमांसया निर्गलितमिदं तत्त्वं सुस्पष्टं प्रतीयते यदात्मनि समवायसम्बन्धेन विराजमानः, वेदादिसच्छास्त्रेषु महर्षिभिर्विहिततत्त्वसाक्षात्कारैः प्रवर्तना विषयतया प्रतिबोधितो, निगूढोऽपि महाजनव्यवहारेण लोकैरनुस्रियमाणः संस्कारविशेषो धर्मो भवति। एतद्धि तत्त्वं मनुना व्यासेन च सुस्फोटितम्—

"विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत" १०॥

---

१. वैशेषिकदर्शनम्—१।२
२. मीमांसासूत्रम्—१।१।२
३. गौतमधर्मसूत्रम्—१।१।२
४. श्रीमद्भागवतम्—६।१।४४
५. मनुस्मृतिः—२।६।
६. मनुस्मृतिः—२।९।
७. मनुस्मृतिः—२।१२।
८. इदं लोके प्रसिद्धम्, परञ्च मूलं मृग्यम्।
९. मूलं मृग्यम्।
१०. मनुस्मृतिः—२।१।

"श्रुतिर्विभिन्ना स्मृतयो विभिन्ना
नैको मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः"[१] ॥

आत्मनो गुणत्वेन च न्यायादिदर्शनेषु धर्मस्य निरूपणं प्रसिद्धम्। यथोक्तं 'न्यायसिद्धान्तमुक्तावल्यां', विश्वनाथपञ्चाननभट्टाचार्यैः—

"बुद्ध्यादिषट्कं सङ्ख्यादिपञ्चकं भावना तथा।
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश"[२] ॥
"धर्माधर्मावदृष्टं स्याद् धर्मः स्वर्गादिकारणम्।
गङ्गास्नानादियागादि व्यापारः स तु कीर्तितः"[३] ॥

## धर्मभेदाः

अथाचारविचारभेदेनास्य धर्मकल्पमहीरुहस्य प्राधान्येन द्वे शाखे कल्प्येते। तत्राचारस्यादित्वादादौ किञ्चिदाचारप्रसङ्गे ब्रूमः।

## आचारः

धर्मोऽयंव्यवहारे प्राधान्येनाचा·त एव लोकानां विज्ञायते। तथाहि—यदि तावत् कोऽपि शान्तप्रकृतिकः, निजनित्यकृत्यसम्पादकः, मितभाषी, मितभोजी च तदाऽयं धर्मिष्ठः। अपि चेत्कोऽपि कटुभाषी, दुर्भोजी, दुर्वृत्तिप्रवृत्तः, शास्त्रविहितसुवर्त्मविचलितस्तदाऽयमधार्मिक इति सर्वानुभवसिद्धम्। आचार एव दुर्जनात् सज्जनं, कुकर्मिणः सुकर्मिणः व्यावृत्तिं करोति। नान्तरेणाचारं कमपि शास्त्रावबोधं निष्कलयितुं कोऽपि प्रभुर्भवति। तथा च निगदितं कैश्चन धर्माचारचरचणैः—

'आचारहीनं न पुनन्ति वेदाः'[४]।

मनुरपि चैनमाचारं प्रथमं धर्मस्कन्धं निरूपयति—

'आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः'[५] ॥

---

१, महाभारतम्।
२. न्यायसिद्धान्तकारिकावली—प्रत्यक्षख०—३२, ३३।
३. न्यायसिद्धान्तकारिकावली—गुणनिरूपणम्—१६१, ६२।
४. मूलं तिरोहितम्।  ५. मनुस्मृतिः १।१०८।

अन्येऽपि—

'आचारप्रभवोधर्मो धर्मस्य प्रभुरच्युतः'[१]।

'मुक्तावल्याम'पि विश्वनाथपञ्चानन भट्टाचार्यैः शिष्टाचारस्यागर्हितत्वं स्वर्गादि-प्राप्तिसाधनत्वञ्च फलं निरूपितम्।

'अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वं सिद्धिमिति'[२]।

'धर्मः स्वर्गादिकारणम्'[३]।

## विचारः

विचारोऽपि तावन्मानवमतिमान्यमानसनिष्ठविचारपरक एव। यावन्तो धर्मा विलसन्ति, सर्वे मानवविचारमेवाश्रयन्ति। 'योगसूत्रे मनुष्यमात्रस्य कृते केचन धर्माः प्रदर्शिताः। तथाहि—

'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहायमाः'[४]। तत्र चायं सर्वैः सर्वत्र च विधातुं-शक्य इति निर्दिष्टम्—

"जाति देशकालसमयानवच्छिन्नाः सार्वभौममहाव्रतम्"[५]।

सन्ति च सनातनधर्मा अपि सर्वेषां पालनीयाः—

"सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम्।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः"[६]।
"कृते च प्रति कर्तव्यमेष धर्मः सनातनः"[७]।

## धर्माचारणफलम्

एवमस्य धर्मस्याचारविचारभेदयोः स्वरूपानुरूपं फलमपि शास्त्रेषु वर्णितम्, लोके च प्रत्यक्षं बहुधा लोचनगोचरी भवति। तथाहि—

'ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत'[८]।

---

१. मूलं मृग्यम्।
२. न्यायसिद्धान्तमुक्तावली, मङ्गलवादः।
३. न्यायसिद्धान्तकारिकावली,—प्र० ख०—३२।
४. योगसूत्रम्—१।३०।
५. योगसूत्रम्—२।३१।
६. मूलंमृग्यम्।
७. मूलम् मृग्यम्।
८. अथर्ववेदः ३।५।१९।

'शय्यासनस्थोऽथ पथि व्रजन्वा
स्वस्थः परिक्षीणवितर्कजालः ।
संसारबीजक्षयमीक्षमाणः
स्यान्नित्यमुक्तोऽमृतभोगभागी[१] ॥

'ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः'[२] ।

'अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः'[३] ।

'सत्यप्रतिष्ठायां क्रियायाफलाश्रयत्वम्'[४] ।

'अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्'[५] ।

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः'[६] ।

'अपरिग्रहस्थैर्ये जन्मकथन्ता सम्बोधः'[७] ।

'शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः'[८] ।

'सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च'[९] ।

'पराञ्चि खानि व्यतृणत् स्वयम्भू —
स्तस्मात् पराङ्ग पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्ष—
दावृत्तचक्षुरमृतत्त्वमिच्छन्'[१०] ।

'सन्तोषादनुत्तमसुखलाभः'[११] ।

'कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः'[१२] ।

'श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम्'[१३] ॥

'एक एव सुहृद्धर्मो निधनेऽप्यनुयातियः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति'[१४] ॥

---

१. व्यासकृतभाष्यम् ।
२. मूलं मृग्यम् ।
३. योगसूत्रम्–साधनपादः—३५
४. योगसूत्रम्–साधनपादः—३६
५. योगसूत्रम्–साधनपादः—३७
६. योगसूत्रम्–साधनपादः—३८
७. योगसूत्रम्–साधनपादः—३९
८. योगसूत्रम्–साधनपादः—४०
९. योगसूत्रम्–साधनपादः—४१
१०. कठोपनिषत्—४।१
११. योगसूत्रम्—४२
१२. योगसूत्रम्—४३
१३. मनुस्मृतिः—२।९
१४. हितोपदेशः ।

'धर्मेण हन्यते व्याधिर्धर्मेण शुभदा ग्रहाः ।
धर्मेण हन्यते शत्रुर्यतो धर्मस्ततो जयः'[१] ॥

'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव, द्वितीयो ब्रह्मचार्याचार्यकुलवासी, तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्वं एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्त्वमेति'[२] ।

'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्वषम्'[३] ।

## धर्मव्यतिक्रमफलम्

यथा धर्मचरणस्य शास्त्रे लोके च फलमुपवर्ण्यते दृश्यते च, तथैव तद्व्यतिक्रमस्यापीति, नाविदितं विदितवेदितव्यानाम् । तथा चोक्तं—

'धर्म एव हतो हन्ति' इति[४] ।

आदित एवैतत् सुप्रचलितोऽस्तियत् धर्मव्यतिक्रमेण कस्यापि जनस्य, वंशस्य, समाजस्य देशस्य वा पतनं जायत एव । यदैव यत्र धर्मोपेक्षा धर्मकर्मत्यागो विधीयते, तदैव तत्र रावणकंसादिसमसमृद्धिबलबुद्धिवतामपि अधः पतनं निश्चप्रचमेव । अतः शास्त्रेष्वपि चैतद्धर्मव्यतिक्रमस्य परिणामोऽनेकधा भणितः—

धर्मो नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत'[५] ।
'अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः'[६] ॥

'उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम'[७] ॥

'अथ चेत् त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिञ्च हित्वा पापमवाप्स्यसि'[८] ॥

'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः'[९] ॥

---

१. महाभारतम् ।
२. छन्दो० २।२३।१
३. गीता—१८।४७
४. मूलं मृग्यम् ।
५. गीता—१।४०
६. गीता—१।४२
७. गीता—१।४४
८. गीता—२।३३
९. गीता—४।७

'आचाराद्विच्युतो विप्रो न वेदफलमश्नुते'[1]।

'न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः'[2]॥

ब्रह्मयस्त्वननुज्ञातमधीयानादवाप्नुयात्।
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपाद्यते'[3]॥

'योऽनधीत्य द्विजोवेदमन्यत्र कुरुते श्रमम्।
जीवन्नेन स शूद्रत्वमाशु गच्छति सान्वयः'[4]॥

'गायत्रीं यो न जानाति ज्ञात्वा नैव उपासते।
नामधारकविप्रोऽसौ न विप्रो वृषलो हि सः'[5]।

'हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्।
परिभूतामधः शय्यां वासयेत्व्यभिचारिणीम्'[6]॥

'अनभ्यासेन वेदानामाचारस्य च वर्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति'[7]॥

## धर्मस्यनिगूढ़ता

अयं धर्मो यद्यप्येवं शास्त्रे लोके च सुप्रथित इति प्रतिपादितम्, तथाप्यस्यात्मनिष्ठतया निगूढ़त्वमभियुक्तैरुपदर्शितम्। युक्तञ्चैतत्, यतोऽयमात्मनो गुणाविशेषरूपेण स्वीक्रियते दार्शनिकैः। तथा चोक्तङ्केनचिद्विचक्षणेन—

'धर्मस्य तत्त्वं निहितं गुहायाम्'[8]
गुहाशब्देन चात्रात्मनो ग्रहणं भवति।

धर्मस्य निगूढ़तयैव न्यायशास्त्रेऽयमदृष्टपदेन व्यवहृतः। तथा चोक्तं न्यायसिद्धान्तमुक्तावल्यां विश्वनाथपञ्चाननभट्टपादैः—

'अदृष्टभावना शब्दा अमी वैशेषिका गुणाः'[9]।
'धर्माधर्मावदृष्टं स्यात्'[10]।

---

१. मनुस्मृतिः — १।१०९
२. मनुस्मृतिः — २।१०३
३. मनुस्मृतिः — २।११६
४. मनुस्मृतिः — २।१६८
५. मूलं मृग्यम्।
६. याज्ञवल्क्य स्मृतिः — १।७०
७. मूलं मृग्यम्।
८. लोकप्रसिद्धमिदम्, परं मूलं मृग्यम्।
९. न्यायसिद्धान्तकारिकावली — ९१
१०. न्यायसिद्धान्तकारिकावली — ६१

तथा चात्मनिष्ठस्यैव जनस्य वस्तुतो धर्मतत्त्वसाक्षात्कारः सम्भवति। धर्मगत्याश्च सूक्ष्मतया तत्तत्त्वाववबोधः सामान्येन किं योगिभिरपि दुरूह इव प्रतिभाति। तथा च महाभारतेऽप्यस्यैकेनोदाहरणेन लोचनभ्रान्तिमोचनं भवति। तथाहि—कौरवपाण्डवयोर्जायमाने युद्धे यदा द्रोणः कौरवचमूचालक आसीत्, तदा तस्याप्रतिमशौर्येण चमूचालनचारुचातुर्येण च द्वन्द्वेऽभिभवितुमक्षमो युधिष्ठिरोधर्ममूर्त्तिरपिसन् कृष्णेनोत्साहितः सकृत्—

'अश्वत्थामा हतो नरो वा कुञ्जर.'[१]।

इति आपाततः सत्यमपि ब्रुवन् किञ्चिन्मृषावलेशलिप्ततया विहितधर्मोल्लङ्घनो यमनगरीनिरीक्षणरूपदण्डं समापत्। अत इदं फलति यद्धर्ममर्मातिगूढ़म्।

## धर्मस्य सरलः पन्थाः

एतावता यद्यपि धर्मस्य निगूढ़त्वं दुरूहत्वञ्च प्रदर्शितं, तथाप्यस्य सरलो मार्गं आचार्यैरुपदर्शितः। यथोक्तं भगवता बादरायेण—

'अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परिपीडनम्' [२]॥

अन्यत्रापि—

'वाक्यैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता'[३]।

'श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यववर्धताम्।
आत्मनः प्रतिकूलानि न परेषां समाचरेत्'[४]॥

'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्'[५]।

'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु माकश्चिद्दुःखभाग्भवेत्'[६]॥

'गुरुरग्निर्द्विजातीनां शूद्राणां ब्राह्मणो गुरुः।
पतिरेको गुरुस्त्रीणां सर्वस्याभ्यागतो गुरुः'[७]॥

---

१. महाभारतम्।
२. व्यासोक्तिरियम्। मूलमन्वेषणीयम्।
३. मूलं मृग्यम्।
४. मूलं मृग्यम्।
५. गीता—२।४०
६. मूलं मृग्यम्।
७. मूलं मृग्यम्।

'विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मंस्ततः सुखम्'[१] ॥

## धर्मस्य मोक्षप्रापकत्वम्

चत्वारो हि पुरुषार्थाः प्रसिद्धयन्ति धर्मोऽर्थः कामो मोक्षश्चेति। तत्र मोक्षस्य सकलपुरुषार्थशिरोमणित्वेऽपि सकलपुरुषार्थमूलकत्वाद् धर्मस्य प्राथम्यमङ्गीक्रियते। धर्मेण हि समुपार्जितोऽर्थः सम्यक् कामोपभोगाय कल्पते। धर्माविरुद्धो हि कामः साक्षाद्भगवद्रूप इति भगवता कृष्णेन गीतायाङ्गदितम्—

'धर्माविरुद्धो लोकेषु कामोऽस्मि भरतर्षभ'[२] ।

तथा चेदृशः कामो निष्कामकर्मप्रवर्तको भवति। तेन च मोक्षद्वारमुद्घाट्यते। तथा च भगवती श्रुतिराह—

'विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'[३] ॥

अत्र चाविद्यापदेन सत्कर्मणो ग्रहणं भवति। अर्थाद् यः पुरुषो विद्यामर्थादात्मज्ञानमविद्यां = सत्कर्म चोभयं वेत्ति, स एकीभूतं कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतम्, अथ कर्मकाण्डं ज्ञानकाण्डं चैकत्रीविधाय द्वितीयेनाविद्यया = कर्मणा मृत्युमुत्तीर्य कृतकृत्यः सन् प्रथमेन विद्यया = ब्रह्मपरिज्ञानेनामृतत्वं समाप्नोतीत्यर्थः।

अर्थकामयोस्तु धर्मः सम्यक् प्रापक एवेति महर्षिव्यासोक्त्या प्रथितम्—

'उर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च किमर्थं न सेव्यते'[४] ॥

---

१. हितोपदेशः ।
२. गीता—७।११
३. शुक्लयजुर्वेदसंहिता—४०।१४
४. मूलं मृग्यम् ।



# मिथिलामहीमण्डनं

## महामहत्तकगणेश्वरठक्कुरः

मिथिलामही, महाविदुषां कर्मस्थली, प्रयोगस्थली, संगमस्थली च वर्त्तते। अत्रैव गौतमसमः महातपस्वी महादानी सर्वविद्याविचारचणश्चासीत्। गौतमस्याश्रमे महाप्रलय इव ईतिकाले अखण्डमहीमण्डलस्य प्रायः सर्वे ऋषयो मुनयश्च समागत्य तदाश्रये सुखेन निवासञ्चक्रुः। अयमेव परमर्षिन्यायदर्शनस्य प्रादुर्भावकोऽभवत्। एवमेव वेदविद्याविशिष्ट-शरण्यः समुद्भावकः ऋषिप्रवरः योगियाज्ञवल्क्यः प्रादुरभूत्। 'ततः प्रभृति तत्पुत्र-पौत्र-परम्परया कात्यायनादयोऽनेके वैदिककर्मधुरीणा ज्ञानविज्ञानविचक्षणा अजायन्त। तस्यां परम्परायामेव महामहत्तकगणेश्वरठक्कुरादयोऽपि स्व-स्वयुगानुरूपं कर्मनैपुण्यं प्रकटयाञ्चक्रुः।

अस्यामेव मिथिलायां मधुबनीमण्डलान्तर्गतविसपीग्रामे कृतनिवासो विराजतेस्म तत्र भवान् महामहत्तकगणेश्वरठक्कुरः। सम्प्रति विसपीग्रामः पत्रालयरूपेण प्रखण्डरूपेण च सुविदितो विद्यते।

मिथिलायाः पञ्ज्यां (पञ्जीप्रबन्धे) मूलतोग्रामद्वारा चास्य परिचय उपलभ्यते। मूलं तस्यैव ग्रामस्य नाम्ना भवति। यस्मिन् ग्रामे वंशस्यादिपुरुषस्य निवासो भव-तिस्म। स एवाख्या सहितः पुरुषस्य तत्तद्वंशजकथनानुसारेण पञ्जीप्रबन्धकालिकः विद्वद्भिर्निर्धारितः। स एव पुरुषस्तस्य वंशस्य वीजीपुरुषः कथ्यते। प्रबन्धेऽस्मिन् ग्रामस्य नाम अङ्कितमस्ति यत्र पञ्जीप्रबन्धकाले तस्य वंशस्य जनो निवसति स्म। एकस्मि-न्मूले अनेके ग्रामा भवितुमर्हन्ति, यतस्तस्य मूलपुरुषः पञ्जीप्रबन्धकाले अनेकेषु ग्रामेषु निवासं करोति स्म, परञ्च प्रत्येकं वंशस्य वीजीपुरुष एक एव जनो भवति, यस्य सन्त-तयः तस्य वंशस्य सर्वे जना भवन्ति। पञ्ज्यां महामहत्तकगणेश्वरठक्कुरस्य मूलं वर्तते 'गढ़विसपी'। ग्रामतोऽपि विसपी एवास्ति। अयं महानुभावोऽपि विसपीग्रामस्यैव निवासी आसीत्। अत एव सिद्धयति यद् वीजीपुरुष विष्णुठक्कुरकालतो गणेश्वर-ठक्कुरस्य स्थितिपर्यन्तं निवासो विसपीग्राम आसीत्। मूले "विसपी" विशेषणविशिष्टः प्रयुक्तोऽस्ति "गढ़" इति शब्दश्च विशेषणमस्ति। यतः विसपी अन्यवंशस्यापि मूल-मासीत्। वस्तुतः केवलं विसपी एव एकं भिन्नमूलमुपलब्धमस्ति, यस्य बीजीपुरुषः 'शङ्करधर' नामकः एको विशिष्टो जन आसीत्। एकस्मिन्नेव ग्रामे द्वयोर्वंशयोर्बीजी-पुरुषयोर्निवासमूलमुभयोर्वंशयोः समानमेव कथ्यते। परञ्च तत्र इत्थं भेदः पञ्ज्यां वर्त्तते, यदुभयोर्मध्ये एकं विशेषणमपरञ्च निर्विशेषणम्।[1]

---

१. निवन्धमाला पृ० ६-७

गढ़विसपीमूलस्य बीजीपुरुषो विष्णुठक्कुरः आसीत्। पञ्ज्यामुपाधिः सर्वत्र साभिप्रायोऽस्ति। अस्य वंशस्य 'ठक्कुर' उपाधिरेतद्वंशजानां महानुभावानां ग्रामाधिपतित्वं सूचयति ग्रामाधिपतित्वं विना ठक्कुर उपाधिर्न प्रयुक्तो भवति। अत एव सिद्ध्यति यदस्य वंशस्य बीजीपुरुषोऽपि ग्रामाधिपतिरासीत्। यश्च 'जागीरदार' पदेन व्यवह्रियते स्म। इदं पदं लोकभाषायां 'जमीन्दार' पदेनापि व्यवह्रियते स्म।

अनया दृष्ट्या विचारे कृते सति ज्ञायते यत् पञ्जीप्रबन्धात् पञ्चाशदधिकशतं (१५०) द्विशतं (२००) वा वर्षेभ्यः पूर्वं विपसी समृद्धिशाली ग्राम आसीत् यत्र द्वयोर्वंशशोर्ब्राह्मणानां निवास आसीत्। उभयोर्मध्य एकः ग्रामाधिपतिरासीत्। प्रायः स एव ग्रामाधिपतिः विष्णुठक्कुरस्य निवासगढ़ः अर्थात् दुर्गभूतमस्ति। तत्तदनुसारेण तस्य वंशस्य 'गढ़विसपीमूलं प्रख्यातमभूत्।[१]

त्रिपाटिकर्मादित्यठक्कुरस्य द्वौ पुत्रौ आस्ताम्। तत्रैकः शिवादित्यनाम्ना प्रसिद्धः देवादित्यः। अपरश्च भवादित्यः। देवादित्यस्य पञ्ज्यां सान्धिविग्रहकमुपाधिरुपलब्धो भवति। भवादित्यस्य च राजवल्लभत्त्वम्। सन्धेर्विग्रहस्य चाधिकारेण युक्तो राजमन्त्री 'सान्धिविग्रहिकः' कथ्यते स्म। एवं राजवल्लभोऽस्य समयस्य 'मोसासाहेवपदवाच्यो भवति स्म। उभयोर्भ्रात्रोर्ज्येष्ठो देवादित्यठक्कुरः। स सिद्धमहापुरुष आसीत्। अनेन स्वयमस्य पुत्रपौत्रादिभिश्चानेकविधसेवातो मिथिलोपकृता गौरवान्विता चाभूत्। अतो मिथिलाया इतिहासेऽस्य महानुभावस्य यशोराशिः स्वर्णाक्षरेलिखितुं योग्योऽस्ति। लक्ष्मी सरस्वत्योरुभयोरेकत्र सम्मेलनस्य महानुभावस्य गृहे आसीत्।

देवादित्यठक्कुरः मन्त्रीचूडामणिमन्त्रिराजतिलकसन्धिविग्रहधूरापात्रप्रभृत्युपाधितो विभूषितो विलोक्यते। वस्तुतोऽस्यैश्वर्यस्य बीजं नैष्ठिकोपासनाऽऽसीत्। चण्डेश्वरोऽस्य महानुभावस्य प्रसङ्गे वर्णयन्नस्य प्रतापं सूर्येणोपमिमीते—

आसीन्मैथिलतीरभुक्तिविषये मन्त्रप्रभावाहृतः
प्रत्यर्थिक्षिति नायकान्धतमसश्चक्रद्विजानांप्रियः॥
नित्योल्लासितमण्डलः सुमनसामर्घ्यश्च पद्माश्रयो
देवादित्य इति त्रिलोकमहितो मन्त्रीन्द्रचूडामणिः॥[२]

एवञ्च—

एतस्याद्भुतसन्धिविग्रहधुरां वोढा पवित्रीकृत–
क्ष्मालोकः शरदिन्दुसुन्दरयशः संदोहगङ्गाम्बुभिः
आसीन्मन्त्रमयद्युतिप्रतिहताभिज्ञान्धकारोदयो
देवादित्य इति प्रसन्नहृदयो देवद्रुमो जङ्गमः॥[३]

१. निबन्धमाला पृ० १०-११
२. कृत्यचिन्तामणिः ( मिथिला तत्वविमर्शः पृ० ७१ ) ३. निबन्धमाला पृ० ११

अनेन ज्ञायते यन्मन्त्रस्य प्रभावाच्छत्रुञ्जयत्वमनायास-विजय शालित्वञ्चास्य महानुभावस्योपलब्धिरासीत्। प्रतिस्पर्धिनो राजानः अनायासेनास्य वशीभूता भवन्ति स्म। उपर्युक्तवाक्ययोर्मन्त्रेण न तन्त्रोक्तमन्त्रस्य, अपितु राज्याङ्गमन्त्रस्य मन्त्रणाविषयस्य ग्रहणमिति केनचिदवगतं, परन्तु तत्र अस्य महानुभावस्य प्रसङ्गे "चक्रद्विजानां प्रियः" इति विशेषणं प्रयुक्तमस्ति। अत्र श्लेषेण सूर्यपक्षे चक्रवाकपक्षिणः प्रियः इत्यर्थो लभ्यते। पक्षान्तरे भैरवीचक्रानुष्ठातुः तान्त्रिकब्राह्मणस्य प्रियः। इदमर्थद्वयं महामहोपाध्याय-मुकुन्द झा बख्शी महाभागा व्याख्यातवन्तः।[1] अनेन स्पष्टं भवति यत् देवादित्यः तन्त्रोक्तवाममार्गस्यानुयायी आसीत्। मन्त्रस्यापि सिद्धिः कृतानेन। अस्य महानुभावस्य प्रसङ्गे पुनः कथयति चण्डेश्वरः—

स्रष्टाऽसौ राजलक्ष्म्याः सचिवकुलगुरुस्तेजसा विश्वसाक्षी
क्षीणानाथानुकम्पापरवशहृदयो जङ्गमः पारिजातः।
दृप्यत्सेनापतीनामपथगतिमतां बुद्धिसिन्धोरगस्त्यो
हम्बीरध्वान्तभानुर्निखिलनिजगुणैस्तोषयामास विश्वम्[2]॥

अयं महानुभावो विविधमहादानानि नानाविधमखानुष्ठानमनेकतडागारामनिर्माणञ्च कृतवान्।[3] महामहत्तकचण्डेश्वरोऽस्य महानुभावस्य सम्बन्धे 'पद्माश्रय' शब्दस्य प्रयोगं कृतवान् तथा बारम्बारं "जङ्गमः पारिजातः" इति प्रयुक्तवान्। जङ्गमपारिजातस्य विशेषणस्य अयमभिप्रायः प्रतीयते यदयं महाशयः अतिदानशीलः स्वभावकोमलश्चासीत्।

वस्तुतः सर्वाधिकमार्मिकविशेषणमस्य महानुभावस्य प्रसङ्गे प्रयुक्तो विद्यते—"हम्बीरध्वान्तभानुरि'ति'। इतिहासेन ज्ञायतेयत् चित्तौड़स्य महाराजो हम्बीरः अलाउद्दीनखिलजीहस्तेन पराजितः अभूत्। अस्मिन् युद्धे रणस्तम्भदुर्गं विजित्य अलाउद्दीनमात्मानं कृतकृत्यममन्यत। कवीश्वरचन्दा झा महाभाग उल्लिखति यत् तस्य संग्रामस्य उपक्रमे रणस्तम्भदुर्गावस्कन्दने अलाउद्दीनखिलजी सहायतार्थं मिथिलेशकर्नाटक महाराजपक्षतः अयं देवादित्यः ज्येष्ठपुत्रेण वीरेश्वरेण सहागच्छत्। यत्किञ्चन व्ययोऽभूत् तत्सर्वं पितापुत्राभ्यां प्रदत्तम्। अस्य निर्वाहः वीरेश्वरः स्पर्शमणिप्रसादात् कृतवान्। 'हम्बीरध्वान्तभानुः" अस्या घटनायाः द्योतकोऽस्ति अस्यैव रणस्तम्भदुर्गस्य विजये अलाउद्दीनः मन्त्रिराजतिलकोपाधिनाऽलञ्चकार देवादित्यमिति श्रूयते। विजयोऽयं सन् १३००-०१ खैस्ताब्देऽभूत्। यश्च १२२२-२३ शकाब्दो भवति तथा तस्मिन् समये मिथिलायाः शासकः महाराजचक्रदेवसिंह आसीत्। यस्य परोक्षे महाराजहरिसिंहदेवस्य राज्याभिषेकः १२२८ परिमिते शकाब्देऽभूत्। न कोऽपि आश्चर्यस्य विषयो यत् एत-

१. निबन्धमाला पृ० १०।११
२. कृत्यचिन्तामणिः ( मिथिलातत्त्वविमर्शः पृ० ७१ )
३. निबन्धमाला पृ० ११

दुपाधेः स्मृतिरक्षार्थं देवादित्यः अतिवृद्धस्वपितुः स्मृतौस्वकूलपूज्यमहादेवस्यस्थापनां करेहनद्यास्तटे कृतवान् । यस्य नामकरणं 'तिलकेश्वर' अभूत् ।[१]

मन्त्रिराजतिलकस्य देवादित्यठक्कुरस्य त्रयो विवाहा अभूवन् । प्रथमः न्याय-वासिकामेश्वरत्रिपाटिनः कन्यायाः, यस्यां द्वौ बालकौ ययोर्नाम्नी पञ्ज्यां 'पर्णागारिक वीरेश्वरः अपरं महामहत्तकगणेश्वरठक्कुर आस्ताम् । द्वितीयविवाहः महरौलीवासि-भगिन्या सह[२] । यस्यां द्वौ बालकौ, प्रथमः महावार्तिकवार्तिकनैबन्धिकधीरेश्वरः द्वितीयः भाण्डागारिकजटेश्वरः । तृतीयविवाहः महथापाटकवासिमाने कार्जिकस्य कन्यया सह । अस्यां त्रयो बालकाः-स्थानान्तरिकहरदत्तः सान्धिविग्रहिकमुद्राहस्तक लक्ष्मीदत्तः, राज-वल्लभः ठक्कुरशुभदत्तश्चेति ।[३]

देवादित्यस्य द्वितीयपुत्रः वीरेश्वरस्यानुजः सोदरो भ्राता महामहत्तकगणेश्वर-ठक्कुरः आसीत् । अयं महात्मा काश्यपगोत्रीयः छन्दोगशाखाया ब्राह्मण आसीदिति, एतेषां पूर्वजानां ग्रन्थबलेन विज्ञायते, किन्तु शङ्कैषा समुदेति यत् काश्यपगोत्रीया मिथिलायां माध्यन्दिनशाखीयाः ब्राह्मणाः विद्यन्ते, किन्त्वयं महानुभावः कथं छान्दोग्यशाखायाः समभवदिति विश्वासपथं नावतरति ।[४]

अस्यमहानुभावस्य पञ्ज्यां 'महामहत्तक' इत्युपाधिरुल्लिखितोऽस्ति[५] । महत्तक शब्दस्य पञ्ज्यां धनाढ्यार्थे प्रयोगो दृश्यते यथा—

महत्तकोधनाढ्ये तु पञ्ज्यां शर्मापुरोहिते ।
दानपात्रे द्विजे चैव प्रतिहस्तः प्रकीर्तितः ॥[६]

महाशब्दोऽतिशयार्थस्य वाचकः अनेन ज्ञायते यत् गणेश्वरः देशे धनद्वारैव ऐश्वर्येण प्रख्यातोऽभूत ।

गङ्गापत्तलकस्य प्रारम्भवाक्ये तु स्वनाम्नि केवलं मन्त्रीति विशेषणमनेन प्रयुक्तम्[७] । परञ्चान्तिमवाक्ये महासान्धिविग्रहिकठक्कुरदेवादित्यस्य तनयः महासान्धि-विग्रहिकठक्कुरवीरेश्वरावरज-महामहत्तकमहासामन्ताधिपतिरित्येव प्रशस्तिः[८] प्रस्तु-ताऽस्ति ।

---

१. निबन्धमाला—पृ० ११-१२
२. पञ्ज्यां श्वसुरस्य नाम नास्ति, येन रहस्यात्मकप्रतीतिर्भवति ।
३. निबन्धमाला पृ० १२-१३
४. मिथिलातत्त्वविमर्शः पृ० ७८
५. निबन्धमाला पृ० १७
६. मिथिलातत्त्वविमर्शः पृ० ७१
७. वेदस्मृतिपुराणादि दृष्ट्वा णङ्गासृतं हितम् । कृतं पत्तलकं रम्यं श्रीगणेश्वरमन्त्रिणा । गङ्गापत्तलकम्, पाण्डुलिपिः ।
८. निबन्धमाला पृ० १७

अस्य महानुभावस्य कृतयः— (१) सुगतिसोपानम् (२) गङ्गापत्तलकम् (३) आह्निकोद्धारः (४) विवाहरत्नाकरः (५) श्राद्धरत्नाकरश्च।

सुगतिसोपानस्य रचनामयं खौआलवंशतिलकं भवशर्माणं नियुज्य कारितवान्।[४]

सुगतिसोपानस्यारम्भश्लोकेषु-सचिवतिलकदेवादित्यस्य महादान-तड़ागयागभूदान-देवालयपूतविश्वस्य वीरेश्वरस्य च वर्णनपूर्वकं मन्त्रिमणिगणेश्वरस्य वर्णनंविद्यते यस्मिन् गणेश्वरस्य प्रशस्तिः— श्रीमान् महामत्तकः महाराजाधिराजः महासामन्ताधिरित्येव मुपलब्धा वर्त्तते[५]।

१. सुगतिसोपानम्—

सुगतिसोपाननामकग्रन्थे निम्नलिखितविषयाः विलसन्ति।

१. अथगङ्गास्मरणं नरकागमफलम्।
२. अथतीर्थगमनादिफलम्।

---

१. मिथिलातत्त्वविमर्शः पृ० ७८। २. मिथिलाङ्कः पृ० ९३

३. मिथिलाङ्कः पृ० ९३

४. अस्य पाण्डुलिपिः इदानीं पं० श्री तेजनाथझा महोदयस्य गृहे सुलभ्याऽस्ति।

५. अभूद्देवादित्यः सचिवतिलको मैथिलपते-
निजप्रज्ञाज्योतिर्दलितरिपुचक्रान्धतमसः।
समन्तादश्रान्तोल्लसित सुहृदर्कोऽपलमणौ
समुद्भूते यस्मिन् द्विजकुलसरोजे विकसितम्॥
अस्मान्महादानतड़ागयागभूदानदेवालयपूतविश्वः।
वीरेश्वरोऽजायतमन्त्रिराजःक्ष्मापालचूडामणि चुम्बिताङ्घ्रिः
नमन्महीपालकिरीटरत्नरोचिच्छटारञ्जितपादपद्मः।
अस्यानुजन्मा गुणगौरवेणगणेश्वरो मन्त्रिमणिश्चकास्ति॥
संशोषयन्ननिशमौर्वनिभप्रतापैर्गौडावनीपरिवृतं सुरतान सिन्धुम्
धर्मावलम्बनकरः करुणार्द्रचेता यस्तीरभुक्तिमतुलामतुला प्रशस्तिः।
श्रीमानेष महामहत्तकमहाराजाधिराजो महा
सामन्ताधिपतिःपिकस्वरयशः पुष्पस्य जन्मद्रुमः।
चक्रे मैथिलनाथभूमिपतिभिः ससाङ्गराज्यस्थिति
प्रौढानेकवशव्वंदैकहृदयो· दोस्तम्भसम्भावितः॥
सच्चित्तवित्तनिकटाहरणे प्रवीणाः शिष्या इहैवविलसन्ति गुणा यदीयाः
खौआलवंशतिलकं भवशर्म संज्ञं प्रज्ञाविनिर्जितमुरारिपदं नियुज्य।
वेदस्मृतिपुराणादि दृष्टवा लोकहितैषिणा।
कृतं सुगतिसोपानं श्रीगणेश्वरमन्त्रिणा॥ सुगतिसोपानम्— पृ० १-७

३. अथतीर्थविशेषमरणं फलम् ।
४. अथदम्पतिपूजा वृषोत्सर्गनिर्णयः ।
५. अथधेनुवत्सरीय वृषनिरूपणम् ।
६. अथप्रकीर्णम् ।
७. अथोदकुम्भनिर्णयः ।
८. अथदाहादिकर्म ।
९. अथचारान्तीरत्नेरप्यस्तिपर्णनरदाहः ।
१०. अथोदकपिण्डदानादि ।
११. अथपिण्डदानम् ।
१२. अथसन्ध्याकृत्यम् ।
१३. अथास्थिसञ्चयः ।
१४. अथैकादशाहश्राद्धार्थं निमन्त्रणादि ।
१५. अथवृषोत्सर्ग प्रयोग ।
१६. ततः उदकुम्भदानम् ।
१७. अथ मासिकप्रयोगः ।
१८. अथ सपिण्डनप्रयोगः ।

तत्रान्तिमं वाक्यं वर्त्तते -- ततः पिण्डाधारकुशानुलमुकञ्च वह्नौ निःक्षिप्यार्घपात्राण्युत्तानीकृत्य शव्यं कृत्वा प्राङ्मुखो दक्षिणजानुनमयित्वा कुशात्रयतिलजलान्यादाय । एतावदेवास्मिन्ग्रन्थे उपलभ्यते ।

२. गङ्गापत्तलकम्—

ग्रन्थस्यादौ इत्थं वर्त्ततेयत्—
ओं नमो भगवते वासुदेवाय ।
वेदस्मृति पुराणादि दृष्ट्वा गङ्गाश्रुतं हितम् ।
कृतं पत्तलकं रम्यं श्रीगणेश्वरमन्त्रिणा ॥ इति

अन्ते च—

अथ अवगाहनस्य— ओं अद्य भवापादानकस्वीयकुललक्षतारणकामो गङ्गावगाहनमहं करिष्ये[1] ।

महामहत्तकरामदत्तठक्कुरो निजनिर्मितायाः दशकर्मपद्धतेः आरम्भवाक्ये पितुः प्रसङ्गे उल्लिखति—

---

१. विवरणात्मकहस्तलेखग्रन्थसची पृ० १११

भूमिपालशिरोरत्न रञ्जिताङ्घ्रिशिरोरुहः। महामहत्तकः श्रीमान् विराजति गणेश्वरः।[१]

गणेश्वरस्य द्वितीयपुत्रो गोविन्ददत्तः। स्वकीयगोविन्दमानसोल्लासनामकग्रन्थ-वर्णने यथा सुगतिसोपाने लिखितमस्तितथा वर्णयामास—

क्षितिपालमौलिरत्नां शुभरञ्जितपादसरोरुहश्रीः।[२]

महाकवि विद्यापतिठक्कुरः पुरुषपरीक्षाग्रन्थे सुबुद्धिकथारूपेण अस्यैव बृहस्पति-सदृशमनीषायाः कथां वर्णयामास। यस्मिन्नस्य महानुभावस्य प्रसङ्गे हरिसिंहदेवस्य मन्त्री, सांख्यसिद्धान्तपारगामी, दण्डनीतिकुशल', राजनीतिकल्लोलिनीकर्णधारः, धर्मज्ञः इतीमानि विशेषणानि प्रयुक्तानि[३]। अन्ते तत्समकालिकस्यापि कवेः श्लोकद्वयमुल्लिलेख यत्र एतद्गुणग्रामगणनाया असम्भवत्वं लौकिकवैदिकविविधकार्येषु विज्ञाततवं तज्जन्य-चन्द्रवन्निर्मलयशः शालित्वं वर्णितमस्ति।[४]

एतेन स्पष्टं भवति यद् गणेश्वरः सम्भवतः धनैश्वर्याद् महाराजाधिराजः पदेन व्यवहृत आसीत्। अथवा यथार्थरूपेण कस्यापि राज्यस्याधिपतिरासीत्। परन्तु आसी-दयं महाराजहरिसिंहदेवस्य महासामन्ताधिपतिः सुबुद्धिविचारचतुरतानीतिनैपुण्य-कारणाच्चतुर्दिक्षु सर्वेषां राज्ञामादरपात्रश्च।

अस्य महानुभावस्य स्थितिकालप्रसङ्गे न कुत्रापि स्पष्टतया समुल्लेखः प्राप्यते। अयं महानुभावः महाराजहरिसिंहदेवस्य कालः त्रयोदशशताब्द्याम् अन्ते आसीदिति स्पष्टतया पण्डितप्रवरेण रमानाथ झा महाभागेन स्वकीयनिबन्धमालायां प्रतिपादितम्। अनेन प्रमाणेन महामहत्तकगणेश्वरठक्कुरस्य स्थितिकालं त्रयोदशशताब्द्यामन्ते स्वीकर्त्तुं न काचिद् विचिकित्सा।

यद्यपि वीरेश्वरवद्गणेश्वरस्यापि विवाहस्य सन्ततेश्च पञ्ज्यामुल्लेखो नोपलभ्यते किन्तु गणेश्वरस्य प्रथमपुत्रः महामहत्तको रामदत्तठक्कुरः तथा द्वितीयपुत्रः आसीद् गोविन्ददत्तठक्कुरः।

महामहत्तकगणेश्वरस्य पूर्वजाः मिथिलायां वर्त्तमानकाले यत् समाजसंघटनं वर्तते, आचारो व्यवहारश्च वर्त्तते, धर्मकर्मानुष्ठानं यद् वर्तते, संस्काराणां ये प्रकाराः

१. दशकर्मपद्धतिः पृ० १

२. निबन्धमाला पृ० १८ ३. पुरुषपरीक्षा पृ० ४८

४. गणेश्वरगुणग्रामं गुणिनो गणयन्ति ते। नूनमम्भोनिधेम्भः कुम्भे सकलयन्ति ते। तथाहि—
लौकिके वैदिके चैव यावत्कार्येण विज्ञता तावदेतादृशं तस्य कुतश्चन्द्रामलंयशः।
पुरुषपरीक्षा पृ० ५०

विलसन्ति तथा विचारस्य या धारा विलसन्ति तेषां समेषा प्रवर्तका आसन्। महाराज-हरिसिंहदेवस्य व्यवस्थायां वीरेश्वर-गणेश्वर-चण्डेश्वराणां साचिव्यकाले रचनाप्रकाशोऽभवत्। सकलब्राह्मणानां दशकर्मपद्धतिः वीरेश्वररचिताया रामदत्तरचितायाश्च पद्धत्याः इदानीं यावत् प्रचलनमस्ति। धर्मविषये एवं व्यवहार विषये चण्डेश्वरठक्कुरस्य रत्नाकरः सर्वमान्यप्रमाणत्वेन विलसति। शिवपूजाविषये चण्डेश्वरस्य शैवमानसोल्लासः विलसति तथैव विष्णुपूजाविषये गोविन्ददत्तविरचितगोविन्दमानसोल्लासः एवमेव गणेश्वरठक्कुरस्य गङ्गा पत्तलकम्। अनेन विज्ञायते यदस्य पूर्वजा यवनानां विजयोल्लासस्य आतङ्के समग्रमैथिलानांमेकत्रीकरणार्थं स्वकीयजीवनंयापितवन्तः। तेषां दानशैली, यज्ञविधान शैली, देवालयस्थापन शैली, एवं तडागादि निर्माणपद्धतिः सत्कर्मणामुचैरादर्शरूपेण समेषां समक्षे उपस्थाप्य मैथिलान् सन्मार्गनिर्देशनं कारितवन्तः। देशस्य धर्मस्य च रक्षां विधाय स्वकीययशोविस्तारं कृतवन्तः। समाजस्य नेतृत्वं कृतवन्तः। षोडश—(१६) शताब्दीं यावत् मिथिलायामीदृशः प्रभाव आसीदस्य वंशस्य। धन्योऽयं वंशः, धन्या अस्मिन् वंशे उत्पन्नाः महापुरुषाः, धन्येयं मिथिलाभूमिः, यत्र एतादृशाः सुपुत्राः प्रादुर्भूताः॥

यथोपलब्धं महामहत्तकगणेश्वरठक्कुरस्य वंशवृक्षः साम्प्रतं प्रस्तूयते—




इति शुभम्।

१. निबन्धमाला—पृ० १०२



म० म० भीष्ममिश्रकृतं

# गीतशङ्करम्

## ( रागकाव्यम् )

## गीतशङ्करस्य विषयसूची





# भूमिका

मैथिल-महामहोपाध्यायो भीष्ममिश्रः कुशलो रससिद्धः कविरासीत्। अनेन रचितं गीतशङ्करं काव्यं जयदेवकृत-गीतगोविन्दपरम्परायां मनोरमं गीतकाव्यं वर्तते। एतत्काव्यस्य द्वौ हस्तलेखौ वर्तेते—(१) कलकत्तास्थे रायल एशियाटिक सोसाइटी संस्थायाम्। (२) प्रयागस्थे हिन्दीसाहित्यसम्मेलने च।

अस्माभिः कलकत्तास्थितग्रन्थाधारेण एतत्सम्पादनं कृतम्। तस्य हस्तलेखस्य समयस्तदन्ते १९१५ संवत् प्रतिपादितः। लिपिकारो देवनागरीलिप्यां रम्पुरबाग्रामे लिलेख शीतलाप्रसादमिश्रनामा।

अस्मिन् काव्ये भवभक्तिविलासप्रमुदितशङ्कर-गिरिजाभिलाष-विरहविडम्बनगौरी-विरह-अभिसार-वासकसज्जा-गौरीसंवाद-खण्डितोक्ति-सखीविचार-मिलनसंज्ञकाः एकादश सर्गाः सन्ति। सम्पूर्णे काव्ये विविधरागेषु २४ गीतानि, विविधच्छन्दस्सु ९६ पद्यानि च सन्ति। गौड़मालव, मैथिली गुर्जरी, वसन्त, सोरठ, रामकरी, देशाख, कार्णाट, कश्मीर, भैरवी, विभासा रागा अत्र प्रयुक्ताः। पदलालित्यं, माधुर्यं, प्रसादः, श्लेषो, नानालङ्काराः, ध्वनयो वाग्वैदग्ध्यं, रसप्रवाहो भाषाप्रवाहश्चात्र सहृदयहृदयान् आवर्जयतितरां नितराम्। स्वाभाविकं वर्णनं बलादिव आकर्षति। यथा, शिवस्य पूजाकाले भक्तै र्यथैव अष्टमूर्त्तेः क्रमशः पूजनं क्रियते, तेनैव क्रमेण पद्ये तत्समावेशोऽवलोनीयः:—

शर्वाय क्षितिमूर्त्तये, भव ! भावायाम्बुस्वरूपात्मने,
रुद्रायाग्निशरीरिणे, बलवतामुग्राय वाय्वात्मने।
भीमायाम्बररूपिणे, पशुपते ! यष्ट्रे महादेव हे !
सोमायेश ! जगत्प्रकाशक ! विभो ! सूर्याय तुभ्यं नमः ॥१-४॥

लोकान् स्थापयते, जगज्जनयते, हव्यैः सुरान् पुष्यते,
देहं व्यापयते, महत्त्रिभुवनं रेणूपमं कुर्वते।
भासाभासयते दिव्यं, निजतनौ नित्यं सुधां बिभ्रते,
ध्वान्तं नाशयते, जगत् त्रपयते देवाय तुभ्यं नमः ॥१-५॥

गीतशङ्करस्य प्रणेता म० म० भीष्ममिश्रो मैथिलपरम्परायां 'बलियासय नरसाम'-संज्ञक-काश्यप-गोत्रीय-मैथिलभूसुरवंशे सप्तदशख्रीष्टशताब्दे जन्म गृहीतवान्। अस्य पिता म० म० धीरमिश्र एवास्य विद्यागुरुरासीत्। भीष्ममिश्रस्यापरं नाम हीरः हीरणो वा आसीद् यस्य प्रयोगो गीतशङ्करस्य गीतानामन्तिमपदेषु द्रष्टुं शक्यते। एतद्वंशक्रमः—जगदीशः—पशुपतिः—धराधरः—धीरः—हीरः (भीष्ममिश्रः)—दयानाथः—पक्षधरः—सिंहेश्वरदत्तः (एतत्कन्यासन्ततिषु चतुर्थः पञ्चमो वा पुरुषो विद्यमानोस्ति)।

भीष्ममिश्रस्य पितृव्यो महोपाध्यायो भिखियामिश्रः, अग्रजो माणिक्यमिश्रोऽनुजश्च मङनीमिश्र इत्येतेषां प्रामाणिकं विवरणं मैथिलीपञ्जीकारेण दरभङ्गा संस्कृतविश्वविद्यालयीयप्राध्यापकेन पं० श्रीहरिनन्दनझाशर्मणा प्रदत्तम्। तदनुसारं भीष्ममिश्रोऽसौ सप्तमपुरुषोऽष्टमपुरुषो वा प्राक्तनस्तेनास्य समयः १६२०–१७०० ई० इत्यनुमातुं शक्यते।

गीतशङ्करस्य सप्तमसर्गान्तस्थे पद्ये सूचितं यद् हिन्दूपतिसंज्ञकस्य राज्ञः पर्णापुरनामके (पद्मावतीपुर्यां वा) नगरे स्थापितस्य 'हीरेश्वर' नामकस्य शङ्करस्य गुणा अत्र गीता इति। हिन्दूपतिश्चासौ नेपालनरेशो वा बुन्देलखण्डाधीशो वेति अनुसंधानसापेक्षं वर्तते। नैपालदेशान्तर्गतं ककमानी संज्ञकक्षेत्रं १६२०–१६६० ई० काले हिन्दूपति हरिहरदेवेन शासितम्। एतदाश्रितेन म० म० उमापत्युपाध्यायेन मैथिलेन "पारिजातहरणम्" नाटकं प्रणीतं प्रसिद्धमेव। बुन्देलखण्डस्य तु राज्ञो हिन्दूपतेराश्रयमवाप्य मैथिलकविवैयाकरणमुख्येन दुर्गादत्तेन वृत्तमुक्तावली छन्दोग्रन्थो निर्मितः।

गीतशङ्करस्य रचनायाः समये कविरयं तरुण एव आसीदिति अस्य काव्यस्य 'लघुकविहीर' (तृतीये गीते)–'नवकविहीर' (२१, २२, २३, २४ संख्यके गीते)–कविवर हीर (पञ्चमे गीते)–सुकविहीर (त्रयोदशे गीते) इत्यादि दृष्ट्वा ज्ञायते। परन्तु अन्ते मैथिलमहामहोपाध्यायभीष्ममिश्रेति वाक्यं दृश्यते। सम्भाव्यते प्रतिलिपिकाले तदुपाधिनालङ्कृतः स्यादिति। अत्रानेन स्वपितुर्धीरमिश्रस्यानेकवारमुल्लेखः कृतः।

भीष्ममिश्रकृता ग्रन्थास्त्वेते ज्ञाताः सन्ति :—

(१) गीताशङ्करम्—(रागकाव्यम्)।

(२) उपमाकौतुकम् (कृष्णवर्णनात्मकं काव्यम्)। एतस्य हस्तलेखः दरभङ्गास्थे मिथिलाविद्यापीठेऽस्ति।

(३) वृत्तदर्पणः (छन्दोग्रन्थः)—हस्तलेखत्रयं दरभङ्गासंस्कृतविश्वविद्यालयेऽस्ति। अत्र सर्वाण्युदाहरणानि कृष्णवर्णनपराणि सन्ति।

त्रयाणामपि ग्रन्थानां सम्पादनमस्माभिः कृतं प्रकाशनमपेक्षते।

संस्कृतगीतकाव्यस्य सुदीर्घा परम्परा वर्तते। महाकविना जयदेवेन गीतगोविन्दं विरच्य द्वादशख्रीष्टशताब्दे अस्याः परम्परायाः शुभारम्भो विहितः। मिथिलायाम् परम्परेयं पूर्णतया विकसिता। अन्यत्रापि अनुसृता। तत्र मुख्यकवीनां चर्चात्र प्रस्तूयते :—

(१) जयदेवः (११००-११८० ई०)—बंगाधिपते र्लक्ष्मणसेनस्य पारिषत्, भोजदेवपण्डितस्य पुत्रः, उत्कलप्रान्तीय-केन्दुविल्वग्रामकृतवासो गीतगोविन्दस्य प्रणेता।

(२) भानुदत्तः (१४७०-१५४० ई०) —गीतगौरीपति-रसमञ्जरी-रसतरङ्गिणी-कुमारभार्गवीयचम्पू-अलङ्कारतिलकादिग्रन्थानांरचयिता। सोदरपुरसरिसवमूलक मैथिलभूसुरगणेश्वरस्य पुत्रः सरिसवग्रामकृतवासः। प्रख्यात-दार्शनिकस्य म० म० शङ्करमिश्रस्य भ्रातुष्पौत्रः।

(३) रामजित् (१५५०-१६०० ई०) श्रीनाथभट्टस्य पुत्रो गीतगीरिशकाव्यस्य प्रणेता काशीप्रदेशस्थः।

(४) जयदेवः ( मैथिलः ) १६०० ई०)—'श्रीमद्विदेहनृपदेशविशेषवासो, निश्शेष-भूमिपतिमण्डलमाननीयः' कविर्जयदेवो रामगीतगोविन्दकाव्यं षट्सर्गात्मकं विरचितवान्।

(५) भीष्ममिश्रः (१६२०-१७०० ई० —गीतशङ्करस्य रचयिता 'बलियासय नरसाम' वंशोद्भवो मैथिलो नरसामग्रामकृतवासः, वृत्तदर्पणस्य रचयिता।

(६) श्यामरामकविः (१७०० ई०)—गीतपीतवसनस्य प्रणेता मैथिलकविः।

(७) कृष्णदत्तः (१७२०-१८०० ई०)—गीतगोपीपति-पुरञ्जनचरितनाटक-कुवलयाश्वीयनाटकादिग्रन्थानां प्रणेता, महाराष्ट्रे पुण्यपत्तनराज्ञा सम्मानितः। मिथिलाम् उद्यानग्रामसमीपे शारदापुरे वासं कृतवान्। बालकविः अस्योपाधिरासीत्।

(८) चन्द्रदत्तः (१७५०-१८३० ई०)—गीतकाशीपति-भक्तमाल - महाकाव्य-परिभाषामणिमालाप्रभृतिग्रन्थानां रचयिता, 'पलिवार परोहि' मूलको हरिनगरग्रामकृतवासो मैथिलः।

(९) मुकुन्दझा (१८६०-१९३० ई०)—मैथिलीभाषायां गीतकाशीपतिकाव्यस्य प्रणेता। माण्डरसिहौलवंशीय मैथिलज्योतिर्वित् टुमनीशर्मणः पुत्रः। अस्य त्रयः पुत्राः शिवानन्द-रामानन्द-गोपानन्दाः विद्वांसो जाताः। पं० शिवानन्दस्य पुत्रः डॉ० कृष्णानन्द झा प्रख्यातो वैयाकरणो दरभङ्गासंस्कृत-विश्वविद्यालये व्याकरणविभागाध्यक्षो वर्तते।

(१०) बदरीनाथझा 'कविशेखरः' (१८९२-१९७३)—राधापरिणयमहाकाव्य-रसगङ्गाधरचन्द्रिका-ध्वन्यालोकदीधिति-प्रभृतिग्रन्थकारः गीतरत्नावलीं निर्मितवान्। सरिसवग्रामकृतवासोऽयं काव्यशास्त्रस्य मूर्धन्यो मैथिलपण्डित आसीत्।

उपर्युक्तगीतकाव्यकर्तां परम्परायां म० म० भीष्ममिश्रस्य सधर्मतां गीतशङ्कर दृष्ट्वैवावगन्तुं शक्यते। अत एतत्प्रकाशनार्थमस्मत्प्रयासो वर्तते। गुणैकपक्षपातिनः सहृदया एनमवलोक्यास्मत्परिश्रमं सफलीकरिष्यन्तीत्याशासे।

|| श्रीगणेशाय नमः ||

## म० म० भीष्ममिश्रकृतं

# * गीतशङ्करम् *

## ( रागकाव्यम् )

(१) सानन्दं सुरवृन्द-वन्दितपदो वृद्धश्रव.प्रार्थन–
प्राग्भावेप्सित- पार्वती -परिणय-प्रौढ़प्रसादोन्मुखः ।
सद्यः संहृतकामकोऽपि जगतां कामार्थसिद्धिप्रदः
कल्पद्रुः कलयत्वनेककुशलं कैलासवासी शिवः ॥१॥

(२) श्रीमन्मैथिल-धीरजेन कविना हीरेण पर्णापुरे
धीरोत्साहि-मनः-प्रमोदकरणं हीरेश्वरप्रीतये ।
माहात्म्यं गिरिजा-गिरीशपदयोर्गीतं मिथः प्रीतयो-
र्भक्तानामनिशं तनोतु सुधियामानन्दकन्दं मुदम् ॥

### गौड़मालवरागे–१

वहसि विततवपुषा कुसुमोपम-भारम् ।
तरुवर-भूधर-नरपरिवारम् ॥
शङ्कर ! धृत-भूमि-सुरूप जय भुवनेश विभो ॥ ध्रुवपदम् ॥१॥

भवति तवैव तनौ जगदखिलमुदारम् ।
पुनरपि भजति भवदविचारम् ॥
शङ्कर ! धृत जलमय-रूप ! जय भुवनेश विभो ॥२॥

सकल-सुरैक-मुखं भुवि यजन-निदानम् ।
भवति भवानवगत-परिमाणम् ॥
शङ्कर ! धृत-पावकरूप ! जय भुवनेश विभो ॥३॥

त्यजसि यदेव यदा वपुरवनत-भारम् ।
भवति तदेव तदा हृत-सारम् ॥
शङ्कर ! धृत-पवनसुरूप जय भुवनेश विभो ॥४॥

जनयसि निजविषये श्रुति-गान-पुराणम् ।
भुवन-चतुर्दशमपि लघुमानम् ॥
शङ्कर ! धृत-गगन-सुरूप ! जय भुवनेश विभो ॥५॥

याजन-यजन-फले सकले शिव ! भोगी ।
भवसि भवेश ! यदप्यसि योगी ॥
शङ्कर ! धृत-भव-यजमान ! जय भुवनेश ! विभो ॥६॥

संश्रयदिव गगनं किरणं तव चित्रम् ।
भवति सतामसतामपि मित्रम् ॥
शङ्कर ! धृत-सोम-शरीर ! जय भुवनेश ! विभो ॥७॥

तिमिरघने भुवने निजरूप-विकासम् ।
सुखयसि सकल जनं वलिताशंम् ॥
शङ्कर ! धृत-दिनकररूप ! जय भुवनेश ! विभो ॥८॥

यदपि न ते भुवने जाता भव ! सूतिः ।
तदपि मया कथिता तव भूतिः ॥
शङ्कर ! धृत-वसु-विध-रूप ! जय भुवनेश ! विभो ॥९॥

सुविनत-हीरकवेरिति गीतिमतीव ।
कलयतु मुदमिह हैममतीव ॥
शङ्कर ! धृत-सकल-सुरूप ! जय भुवनेश ! विभो ॥१०॥

(३) शर्वाय क्षितिमूर्त्तये, भव ! भवायाम्बुत्वरूपात्मने
रुद्रायाग्नि-शरीरिणे, बलवतामुग्राय वाय्वात्मने ।
भीमायाम्बररूपिणे पशुपते ! यष्ट्रे महादेव हे ।
सोमायेश ! जगत्प्रकाशक ! विभो ! सूर्याय तुभ्यं नमः ॥

(४) लोकान् स्थापयते जगज्जनयते हव्यैः सुरान् पुष्यते
देहं व्यापयते महत्त्रिभुवनं रेणूपमं कुर्वते ।
भासा भासयते दिवं निजतनौ नित्यं सुधां बिभ्रते
ध्वान्तं नाशयते जगत् त्रपयते देवाय तुभ्यं नमः ॥

## मैथिलरागे—२

जय जय देव महेश ! महेश ॥ ध्रुवम् ॥
चरण-कमल-निपतित-बिबुधेश ।
सुरसैनिक-निजतनय-गणेश ॥१॥
सतत-दिगम्बर ! विजित-धनेश ।
रजत-महीधर सुन्दरवेश ॥२॥
पर्णापुर-सुविदित-हीरेश ।
सकल-सुरासुर-नर-हृदयेश ॥३॥
जनय कुशलमिह जय गिरिजेश ।
हीरनरे कृत-कवितादेश ॥४॥ (क्रमशः)

# विश्वासाष्टकम्

कुतो मां मृग्यसे मनुज, त्वदीये मानसे सोऽहम् ।
वसामि स्वालये विमले जप त्वं सन्ततं 'सोऽहम्' ॥१॥

त्वमंशो राजसे जीवो मदीयोऽनन्यसन्मित्रम् ।
विहायैनं सखायं किं सचिन्तो जायसे चित्रम् ॥२॥

वसामि ब्रह्मलोके वा न वैकुण्ठे न कैलासे ।
स्थले सलिले प्रकाशे वा समीरे वाऽपि नाकाशे ॥३॥

न तीर्थे मन्दिरे वाऽहं गिरौ शृङ्गे महारत्ने ।
व्रते दाने जपे वाऽहं न सन्न्यासे महायत्ने ॥४॥

कथं कुत्रासि पृच्छसि चेदिदानीं संशृणु त्वरितम् ।
सदा निवसामि विश्वासे विचित्रं मित्र मे चरितम् ॥५॥

विवादं तद् विहाय त्वं विरुद्धं लोकवेदानाम् ।
विशुद्धं रूपमेतन्मे हरं सेवस्व खेदानाम् ॥६॥

यथाऽम्बायां शिशुर्नित्यं प्रकृत्या वर्तते भुवने ।
यथा बीजं पृथिव्यां वा जनो निद्रागतः शयने ॥७॥

तथैव त्वं यदा सुदृढं स्वभावादाश्रितो नितराम् ।
मदीये पूर्णविश्वासेऽविताऽस्मि त्वां तदा सुतराम् ॥८॥

इदं कृष्णस्य विश्वासाष्टकं यः सेवते भक्त्या ।
सदा साहाय्यमातनुते तदीयं श्रीहरिः शक्त्या ॥९॥

